Yageswar
Samantrakgrahashantiprayog
समन्त्रक ग्रहशान्ति प्रयोग
Sanskrit
Paper – Printed
San 1867 (151 years old)
53 Folio
9.9" x 4.8"
Complete





॥हरिः॥ ॥ॐ॥

# अथ समन्त्रकग्रहशान्तिप्रयोग

## प्रारम्भः



द्वितीयावृत्तिः] [१०००

Printed by Gauri Shanker Lal at Chandraprabha Press, Benares City. Published by the Manager B. B. Depot Benares.

॥ श्रीगणेशाय नमः ॥ अथातोग्रहयज्ञं व्याख्यास्यामस्तत्र पुण्याहोक्त नक्षत्रे कुर्यादाचम्य प्राणानायम्य सङ्कल्प्य च गणेशपूजनस्वस्ति पुण्याहवाचना विघ्नमण्डपदेवता षोडषमातृका तृणमातृका तोरणद्वारादिमातृकाः सम्पूज्यायुष्य मन्त्रजपनान्दी श्राद्धाचार्य्य वरणान्तं कृत्वासङ्कल्पपूर्वकं सर्षपान्विकीर्य पञ्चग-व्यप्रोक्षणं कृत्वाधिदेवता प्रत्यधिदेवता गणपत्यादि लोकपालेन्द्रादि दशदिक्-पालयुतान् ग्रहान्सम्पूज्यैशान्यां कलशाराधन रुद्रवरुणादि पूजनब्रह्मोपवेशना-द्याघारान्तं कुर्यात् ॥१॥ द्रव्यंसन्त्यज्य समित्तिलचर्वाज्यद्रव्यैः प्रत्येकमष्टोत्तर सहस्रमष्टोत्तर शतमष्टाविंशत्यन्यतम संख्ययावाहुत्वानवाहुतिञ्च कृत्वाग्नेयः सम्पाद्याचार्य्याय गामन्येभ्यो ऋत्विग्भ्योदक्षिणान्दत्वाभिषिच्ययजमानं ब्राह्म-णान्भोजयित्वा भूयसीश्चदत्वाशिषोर्गहीत्वाकर्मेश्वरार्पणं कुर्यादिति ग्रहशान्तिरे

षएवंविधिर्यत्र क्वचिच्छान्तिः ॥२॥ सान्दीपनिं मुनिं श्रेष्ठमवन्तिपुरवासिनम्। राम
कृष्णार्चितपदं मालवीयं तपोधनम् ॥ ० ॥ पूर्वाचार्यं जगद्वन्द्यं नत्वा ध्यात्वा
मुहुर्मुहुः। मुनीनां मतमालोक्य सम्प्रदायं सतान्तथा ॥२॥ ग्रन्थेभ्यः सारमुद्धृत्य
विचार्यसदसच्चयत्। वेदवेदाङ्गविदुषा विश्वेश्पुरवासिना ॥ ३ ॥ कर्मकाण्डमुप
नाम्ना वै श्रीयागेश्वरशर्म्मणा। बालानां सुखबोधाय निबन्धः क्रियते मया ॥४।
चन्द्रादिशुभग्रहानुकूलसमये शुभेदिने कृतनित्यक्रियो यजमानः शुभासने प्राङ्मुख
उपविश्य स्वदक्षिणतः पत्नीं चोपवेश्य। ॐ केशवाय नमः ० ॐ नारायणाय
नमः २ ॐ माधवाय नमः ३ ॥ इति त्रिराचम्य ॥ ॐ पवित्रेस्थो वैष्णव्यौ
सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवि-
त्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥०॥ इति मन्त्रेण पवित्रधारणं रामः
कृत्वा ततःप्राणायाममन्त्रयं कुर्यात्। ॐ अपवित्रः पवित्रो वा सर्वावस्थांगतो ॥ ५ ॥

पिवा ॥ यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजा-
सामग्रीं च संप्रोक्ष्य तण्डुलपूरितताम्रपात्रे मृन्मये वा कुंकुमेनाष्टदलं पद्मं कृत्वा
तदुपरिगोमयमयींगौरीं फलमयंगणेशं च संस्थाप्यहस्तेऽक्षतपुष्पाणि
गृहीत्वा आनोभद्रादीन् मंगलमन्त्रान् पठेत् ॥ ॐ आनोभद्राः क्रतवोयन्तु
विश्वतोदब्धासो अपरीतास उद्भिदः। देवानोयथासदमिद्वृधे असन्नप्रायुवो रक्षिता-
रोदिवे दिवे ॥१॥ देवानां भद्रासुमतिर्ऋजूयतान्देवानाठं रातिरभिनोनिवर्तताम्।
देवानागूं सख्यमुपसेदिमाबयन्देवानऽआयुः प्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्व-
यानिविदाहूमहेवयं भगम्मित्रमदितिन्दक्षमास्रिधम्। अर्य्यमणंवरुणंठं सोमम-
श्विनासरस्वतीनः सुभगामय स्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजं तन्मा-
तापृथिवीतत्पिताद्यौः। तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विनाशृणुतन्धि-
ष्ण्यायुवम् ॥ ४ ॥ तमीशानं जगतस्तस्थुषस्पतिन्धियं जिन्वमवसेहूमहेवयम्।

य. श्रा. ॥ ३ ॥

पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रो-
वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नोबृ-
हस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंय्यावानोव्विदथे षुज-
ग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥
भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवागूँ सस्त-
नूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्रा-
जरसंतनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥
अदितिर्द्यौरदिर न्तरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चज-
नाऽअदितिर्जातमदितिर्जनित्वम् ॥१०॥ द्यौः शान्तिरन्तरिक्षठं० शांन्तिः पृथिवी-
शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्र- रामः
ह्मशान्तिः सर्वगूँ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ ११ ॥ यतोयतः ॥ ३ ॥

समीहसेततोनोऽभयंकुरु ॥ शन्नः कुरुप्रजाभ्योभयंनः पशुभ्यः ॥ १२ ॥ सुशा-
न्तिर्भवतु ॥ श्रीमन्महागणाधिपतयेनमः ॥ लक्ष्मीनारायणाभ्यांनमः ॥ उमा-
महेश्वराभ्यांनमः ॥ वाणीहिरण्यगर्भाभ्यांनमः ॥ शचीपुरन्दराभ्यांनमः ॥ माता-
पितृभ्यांनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्योनमः ॥ ग्रामदेवताभ्योनमः ॥
वास्तुदेवताभ्योनमः ॥ स्थानदेवताभ्योनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्यो-
ब्राह्मणेभ्योनमः ॥ विश्वेशंमाधवंधुण्ढिंदण्डपाणिंचभैरवं ॥ वन्देकाशींगुहांगङ्गां-
भवानींमणिकर्णिकां ॥ १ ॥ वक्रतुण्डमहाकायकोटिसूर्यसमप्रभ ॥ निर्विघ्नंकुरुमे-
देवसर्वकार्येषुसर्वदा ॥ २ ॥ सुमुखश्चैकदन्तश्चकपिलोगजकर्णकः ॥ लम्बोदरश्च-
विकटोविघ्ननाशोविनायकः ॥ ३ ॥ धूम्रकेतुर्गणाध्यक्षोभालचन्द्रोगजाननः ॥ द्वा-
दशैतानिनामानियःपठेच्छृणुयादपि ॥ ४ ॥ विद्यारम्भेविवाहेचप्रवेशेनिर्गमेतथा ॥
संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ ५ ॥ शुक्लाम्बरधरंदेवंशशिवर्णंचतुर्भुजं ॥

प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशान्तये ॥ ६ ॥ अभीप्सितार्थसिध्यर्थंपूजितोयःसुरा-
सुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ ७ ॥ सर्वमङ्गलमंगल्येशिवेसर्वार्थ
साधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ ८ ॥ सर्वदासर्वकार्येषुना-
स्तितेषाममंगलम् ॥ येषांहृदिस्थोभगवान्मङ्गलायतनंहरिः ॥ ९ ॥ तदेवलग्नंसु-
दिनंतदेवताराबलंचन्द्रबलंतदेव॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरा-
मि॥१०॥लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थो-
जनार्दनः ॥ ११ ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूति
र्ध्रुवानीतिर्मतिर्मम ॥१२॥ अनन्यांश्चिंतयंतोमांयेजनाःपर्युपासते ॥ तेषांनित्या-
भियुक्तानांयोगक्षेमंवहाम्यहं ॥ १३ ॥ स्मृतेसकलकल्याणंभाजनं यत्रजायते ॥
पुरुषंतमजंनित्यं व्रजामि शरणंहरिम्॥१४॥ सर्वेष्वारम्भकार्येषुत्रयस्त्रिभुवनेश्वराः॥ रामः
देवादिशंतुनः सिद्धिंब्रह्मेशानजनार्दनाः ॥ १५ ॥ कुशपुष्पयवाक्षतजलद्रव्यंचा- ॥ ४ ॥

दायसंकल्पंकुर्यात् । ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतोमहापुरुषस्य विष्णु-राज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोद्वितीयेपरार्द्धेविष्णुपदे श्रीश्वेतवाराहक-ल्पेवैवस्वतमन्वन्तरे अष्टाविंशतितमेयुगेकलियुगेकलिप्रथमचरणे जम्बूद्वीपेभूर्लो-केभारतवर्षेभरतखण्डेआर्यावर्तैकदेशे अविमुक्तवाराणसीक्षेत्रे । आनन्दवनेमहा-स्मशानेगौरीमुखेत्रिकंटकविराजिते । भागीरथ्याः पश्चिमेतीरे विक्रमशकेबौद्धा वतारेअमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकऋतौमहामाङ्गल्यप्रदमासोत्त मेमासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुक-योगे अमुककरणेरौद्राद्यमुककाले अमुकराशिस्थितेचन्द्रे अमुकाराशिस्थिते श्री सूर्ये अमुकराशिस्थितेदेवगुरौशेषेषुग्रहेषुयथायथाराशिस्थानस्थितेषु सत्सुएवं ग्रहगुणविशेषण विसिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्माहं मम आत्मनः श्रुतिस्मृति पुराणोक्तफलप्राप्त्यर्थं कायिकवाचिकमानसिक सांसर्गिक

म. था. चतुर्विधपातकदुरितक्षयद्वाराधर्मार्थकाममोक्षचतुर्विधलक्ष्मीप्राप्त्यर्थं सर्वग्रहस्व
॥ ५ ॥ रूपी श्रीपरमेश्वरप्रीत्यर्थंग्रहशान्तिमहंकरिष्ये ॥ तदंगत्वेन स्वस्तिपुण्याहवाचनं
अविघ्नपूजनं मण्डपदेवतास्थापनंपूजनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्य
मन्त्रजपं नान्दीश्राद्धं आचार्यादिवरणानि ( ग्रहानुकूल्यतासिध्यर्थं ग्रहयज्ञं ) च
करिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः पूजनमहंकरिष्ये इति स-
ङ्कल्पः ॥ हस्तेअक्षतान्गृहीत्वा गणपतिमावाहयेत् ॥ तत्रमन्त्रः ॥ हेहेरम्बत्वमेह्येहि-
ह्यम्बिकात्र्यंबकात्मज ॥ सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभपितुः पितः ॥०॥ नागास्य
नागहारस्त्वं गणराजचतुर्भुज ॥ भूषितः स्वायुधैर्दन्तपाशांकुशपरश्वधैः ॥ २ ॥
आवाहयामिपूजार्थं रक्षार्थं च ममक्रतोः ॥ इहागत्यगृहाणत्वं पूजायागं च रक्षमे
॥३॥ ॐ गणानांत्वागणपतिंꣳ हवामहेप्रियाणान्त्वाप्रियपतिंꣳ हवामहेनिधीनां रं॰ प्र॰
त्वानिधिपतिंꣳ हवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥१॥ ॥ ५ ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय गणपतये नमः गणपतिमावाहयामि स्थापयामि ॥
हेमाद्रितनयां देवीं वरदां भैरवप्रियां ॥ लम्बोदरस्य जननीं गौरीमावाहयाम्यहं १
ॐ अम्बे अम्बिके अम्बालिके न मानयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकां कांपीलवा-
सीनीम् १ ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि ॥ ॐ मनो
जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु ॥
विश्वेदेवास इह मादयन्तामोंप्रतिष्ठ १ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणा
क्षरन्तु च ॥ अस्यै देवत्वमर्चायै मामहेति कश्चन ॥ १ ॥ गणेशाम्बिके सुप्रतिष्ठि
ते वरदे भवतं ॥ ॐ गणेशाम्बिकाभ्यां नमः आसनं स० ॐ गणेशाम्बि० एता-
नि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि समर्पयामि ॥ ॐ पञ्च नद्यः सर-
स्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशे भवत्सरित् ॥ १ ॥ पञ्चा-
मृतं मयानीतं पयोदधिघृतं मधु ॥ शर्कराचसमायुक्तं स्नानार्थं प्रतिगृह्यतां ॐ ग०

म. शा. पंचामृतस्नानं स० अथवा ॐ पय÷पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेप-
॥ ६ ॥ योधाः ॥ पयस्वतीः प्रदिश÷संतुमह्यम् ॥ ॐ ग० पयः स्नानं स० ॐ दधि-
क्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ ॐ ग० दधिस्नानं स० ॐ घृतम्मिमिक्षेघृतमस्य योनिर्घृतेश्रितोघृत
म्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतं वृषभवक्षिहव्यम् ॥ ॐ ग०
घृतस्नानं स० ॐ मधुव्वाताऋतायतेमधुक्षरंतिसिन्धवः ॥ माध्वीर्न्नः संत्वोषधीः १
मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः+मधुद्यौरस्तुनःपिता २ मधुमान्नोव्वन-
स्पतिर्मधुमाँ२ऽअस्तुसूर्य÷ ॥ माध्वीर्ग्गावोभवन्तुनः ३ ॐ ग० मधुस्नानं स०
ॐ अपाꣳरसमुद्वयसꣳसूर्य्येसंतꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंव्वो
गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टंतमम् राम
ॐ ग० शर्करास्नानं स० ॐ आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन ॥ महेरणा ॥ ६ ॥

यच्चक्षसे॥३॥ गंगाचयमुनाचैवगोदावरीसरस्वती॥ नर्मदासिंधुकावेरीस्नानार्थंप्रति
गृह्यतां ॥ ॐ ग० शुद्धोदकस्नानं स० ॐ ग० स्नानांतेआचमनं स० ॐ युवासु
वासाः परिवीतऽआगात्सउश्रेयान्भवतिजायमानः॥ तन्धीरासः कवयऽउन्नयन्ति
स्वाध्योमनसादेवयंतः ॥ शीतवातोष्णसंत्राणलज्जायारक्षणंपरं ॥ देहालंकरणं
वस्त्रमतः शान्तिंप्रयच्छमे । ॐ ग० वस्त्रं स० सुजातो० उपवस्त्रं वा ॥ ॐ ग० व
स्त्रोपवस्त्रार्थेरक्तसूत्रंसमर्पयामि अलंकरणार्थे अक्षतान् स० ॥ ॐ यज्ञोपवीतं
परमं पवित्रं प्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुंचशुभ्रं यज्ञोपवीतं
बलमस्तुतेजः ॥ नवभिस्तंतुभिर्युक्तं त्रिगुणं देवतामयं ॥ उपवीतं मयादत्तं गृहा
णपरमेश्वर ॥ ॐ ग० यज्ञोपवीतं स० ॥ ॐ ग० आचमनं स० ॥ श्रीखण्डंचन्दनं
दिव्यं गन्धाढ्यं सुमनोहरं ॥ विलेपनं सुरश्रेष्ठचन्दनं प्रतिगृह्यताम् ॥ ॐ त्वांग
न्धर्वाऽअखनँस्त्वामिन्द्रस्त्वांबृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्माद-

अ. धा. मुच्यत ॐ ग० गन्धं स० अक्षताश्चसुरश्रेष्ठाः कुंकुमाक्ताः सुशोभिताः । मया
॥ ७ ॥ निवेदिताभक्त्यागृहाणपरमेश्वर ॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अ-
स्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विंद्रतेहरी ॥ ॐ ग० अक्षतान्स० मा
ल्यादीनिसुगन्धीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां
॥१॥ ओषधीः प्रतिमोदध्वंपुष्पवतीः प्रसूवरीः ॥ अश्वाऽइवसजित्वरीर्वीरुधः पार-
यिष्ण्वः ॥ ॐ ग० पुष्पमालांस० दूर्वांकुरान्सुहरितानमृतान्मंगलप्रदान् ॥
आनीतास्तवपूजार्थंगृहाणगणनायक ॥ ॐ काण्डात्काण्डात्प्ररोहंतीपरुषः परु-
षस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेन च ॥ ॐ ग० दूर्वांकुरान्स० नानापरिमलैर्द्र-
व्यैर्निर्मितंचूर्णमुत्तमं॥अबीरनामकंचूर्णंगन्धचारुप्रगृह्यतां॥ॐअहिरिवभोगैः पर्येति
बाहुंज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसं० रामः
संपरिपातुविश्वतः ॐ ग० नानापरिमलद्रव्याणिस० वनस्पतिरसोद्भूतोगंधाढ्योगं ॥ ७ ॥

२

घउत्तमः ॥ अग्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां ॥ ॐ धूरसिधूर्व्वधूर्व्वन्तंधूर्वतंज्यो
स्मान्धूर्व्वतितंधूर्व्वयंव्वयंधूर्व्वामः ॥ देवानामसिव्वन्हितमर्ठं० सस्नितमंपप्रितमञ्जुष्ट
तमन्देवहूतमम् ॥ ॐ ग०धूपंस० ॥ साज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया ॥ दीपं
गृहाणदेवेशत्रैलोक्यतिमिरापहं॥ भक्त्यादीपंप्रयच्छामिदेवायपरमात्मने॥ त्राहिर्मा
निरयाद्घोरादीपज्योतिनमोस्तुते ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्योज्योति
र्ज्योतिः सूर्यः स्वाहा॥ अग्निर्व्वर्च्चोज्योतिर्व्वर्च्चःस्वाहासूर्योव्वर्च्चोज्योतिर्व्वर्च्चः स्वाहा
ज्योतिः सूर्यः सूर्योज्योतिः स्वाहा ॥ १ ॥ ॐ ग० दीपं स० हस्तप्रक्षालनं० ॥
नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ॥ ईप्सितंमेवरंदेहिपरत्रचपरांगतिं ॥ शर्करा
खंडखाद्यानिदधिक्षीरघृतानि च ॥ आहारंभक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यतां ॥
ॐ नाभ्याऽआसीदन्तरिक्षर्ठं० शीर्ष्णोद्यौः समवर्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रा
त्तथालोकाऽँअकल्पयन् ॐप्राणायस्वाहा ॐ अपनायस्वा०ॐसमानायस्वा० ॐ

उदानायस्वा० ॐव्यानायस्वा०ॐ ग० नैवेद्यं स०ॐ ग०उत्तरापोशनं स० हस्तप्रक्षा
लनार्थेजलं स०मुखप्रक्षालनार्थेजलं स०॥ वा आचमनीयंमध्येपानीयं उत्तरापोशनं
स०॥ ॐ चन्दनंमलयोद्भूतंकस्तूर्यादिसमन्वितं॥ करोद्वर्तनकंदेवगृहाणपरमेश्वर
ॐ ग० चन्दनेनकरोद्वर्तनं स० ॐ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ एला-
दिचूर्णसंयुक्तंतांबूलंप्रतिगृह्यतां॥ ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत॥ वसन्तो
स्यासीदाज्यंग्रीष्मऽइध्मः शरद्धविः ॥ ॐ ग० मुखवासार्थेपूगीफलतांबूलं स०
हिरण्यगर्भगर्भस्थंहेमवोजंविभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिंप्रयच्छमे॥
ॐ हिरण्यगर्भः समवर्तताग्रेभूतस्यजातः पतिरेकऽआसीत ॥ सदाधारपृथिवी
न्द्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ॐ ग० कृतायाःपूजायाः साद्गुण्यार्थेदक्षि
णां स०॥ कदलीगर्भसंभूतंकर्पूरंतुप्रदीपितं ॥ आरार्तिकमहंकुर्वेपश्यमेवरदोभव ॥
ॐ इदꣳ हविः प्रजननंमेऽअस्तुदशवीरꣳ सर्वगणꣳ स्वस्तये ॥ आत्मसनि

प्रजासनिपशुसनि लोकसन्य भयसनि॥ अग्निः प्रजांबहुलांम्मेकरोत्वन्नम्पयोरेतो अस्मासुधत्त ॥ ॐ ग० कर्पूरनीराजनं स० ॥ नानासुगंन्धिपुष्पाणियथाकालोद्भवा नि च ॥ पुष्पाञ्जलिर्मयादत्तोगृहाणपरमेश्वर॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिध र्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानः सचन्तयत्रपूर्वेसाध्याः संतिदेवाः ॥ ॐ गणनां त्वा०म् १ अंबेअंवि०म् ॥ ॐ राजाधिराजायप्रसह्यसाहिने ३ नमो वयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यं कामेश्वरोवैश्रवणोददातु ॥ कु वेरायवैश्रवणायामहाराजायनमः । ॐस्वस्तिसाम्राज्यंभौज्यंस्वा।रा।ज्यंवैराज्यं पार मेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमंतपर्यायैस्यात् सार्वभौमस्स।वांयुषांतादाप रार्धात्॥पृथिव्यैसमुद्रपर्यंतायाऽएकार।डितितदप्येषश्लोकोभिगीतोमरुतः परिवे ष्टारोमरुतस्यावसन्गृहे ॥ आवीक्षितस्यकामप्रेविश्वेदेवाः सभाः सदइति ॥ ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोवाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमति

अ. शा. संपतत्रैर्द्यावाभूमीजनयन्देवएकः ॥ ॐ ग० मं अपुष्पाञ्जलिं स० यानिकानि

॥ ९ ॥ चपापानिज्ञाताज्ञातकृतानिच ॥ तानिसर्वाणिनश्यंतिप्रदक्षिणपदेपदे ॥ ॐ येती

र्थानिप्रचरन्तिसृकाहस्तानिषंगिणः। तेषाठ० सहस्रयोजनेवधन्वानितन्मसि ॐ ग०

प्रदक्षिणां० अथविशेषार्घः ॥ जलगंधाक्षतफलपुष्पदूर्वादक्षिणाः ताम्रपात्रेप्रक्षि-

प्य अवनिकृतजानुमंडलः ॐ रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक ॥ भक्तानाम

भयंकर्तात्राताभवभवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिन्धोषाण्मातुराग्रजप्रभो ॥ वर

दस्त्वंवरंदेहिवांछितंवांछितार्थद ॥२॥ अनेनफलदानेनफलदोऽस्तुसदामम ॐ ग०

विशेषार्घ्यंसम०॥ अथप्रार्थना ॥ विघ्नेश्वरायवरदायसुरप्रियायलम्बोदरायसकलाय

जगद्धिताय॥नागाननायश्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमोनमस्ते ॥१॥

भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय॥विद्याधरायविकटाय रामः

चवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥२॥ नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः ॥ ॥ ९ ॥

नमस्तेरुद्ररूपायकरिरूपायतेनमः॥३॥विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे॥ भक्त
प्रियायदेवायनमस्तुभ्यंविनायक॥४॥लम्बोदरनमस्तुभ्यंसततंमोदकप्रिय ॥ निर्वि
घ्नंकुरुमेदेवसर्वकार्येषुसर्वदा॥५॥ त्वांविघ्नशत्रुदलनेतिचसुन्दरेति भक्तप्रियेतिसुखदे
तिफलप्रदेति ॥ विद्याप्रदेत्यघहरेतिचयेस्तुवंतितेभ्योगणेशवरदोभवनित्यमेव ॥६॥
अनयापूजयागणेशांबिकेप्रीयेतामूनमम ॥ इतिगणेशपूजनंसमाप्तम् ॥ अथकल-
शस्थापनम् कलशलक्षणं च ॥ स्वर्णं वाराजतं वापिताम्रमृन्मयजंतुवा ॥ अकाल-
मव्रणं चैवसर्वलक्षणसंयुतम् ॥ पञ्चाशांगुलवैपुल्यमुत्सेधेषोडशांगुलं ॥ द्वादशांगुल-
कंमूलं मुखमष्टांगुलं तथा ॥ अथ सप्तमृदः ॥ अश्वऽस्थानाद्गजस्थानाद्वल्मीका-
त्सङ्गमाद्ध्रदात् ॥ राजद्वाराच्चगोष्टाच्चमृदमानीयनिक्षिपेत् ॥ अथसर्वौषधयः ॥
मुरामांसीवचाकुष्टं शैलेयंरजनीद्वयं ॥ सटीचंपकमुस्ताच सर्वौषधिगणस्मृतः॥ अथ
पञ्चपल्लवान् ॥ न्यग्रोधोदुम्बरोश्वत्थचूतजं बूतथैवचेति ॥ अथपञ्चरत्नानि ॥ कनकं

कुलिशं मुक्तापद्मरागंच नीलकमिति ॥ प्रकारान्तरम् ॥ वज्रमौक्तिकवैदूर्य्यप्रवा
लं चेन्द्रनीलकम् ॥ अलाभेसर्वरत्नानांहेमंसर्वत्रयोजयेदिति ॥ ततः कुंकुमादिना
भूमौअष्टदलंपद्मं कृत्वा ॥ यवपिष्टेन अबीरचूर्णकेवा ॥ ॐ महीद्यौः पृथिवीच न
ऽइमं यज्ञंमिमिक्षतां ॥ पिपृतान्नोभरीमभिः ॥ पृथिवीत्वया धृतालोकादेवित्वंविष्णु
नाधृता ॥ कलशाधार भूतंहिपवित्रं कुरुचासनम् ॥ इति भूमिंस्पृष्ट्वा ॥१॥ ॐ ओष-
धयः समवदंतसोमेनस हराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳ राजन्पारयामसि ॥१॥
यवोसिधान्यराजस्त्वं सर्वोत्पत्तिकरः शुभः ॥ प्राणिनां जीवनोपायः कलशाधः
क्षिपाम्यहम् ॥ इति भूमौ धान्यंविकिरेत् ॥२॥ ॐ आजिघ्रकलशंमह्यात्वाविशं-
त्विंदवः॥पुनरूर्ज्जानिवर्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः॥
कलाकलाहिदेवानां दानवानां कलाःकलाः ॥ संगृह्यनिर्मितोयस्मात्कलशस्तेन
उच्यते ॥ इति धान्योपरिकलशंस्थापयेत् ॥३॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्य

स्कंभसज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्य ऋतस-
दनमासीद ॥ आपस्त्वमसिदेवेशज्योतिषां पतिरव्ययम् ॥ प्राणिनां जीवनोपायः
कलशेपूरयाम्यहम् ॥ इति कलशेजलंपूरयेत् ॥३॥ ॐ त्वांगन्धर्वा० त ॥ श्रीखंडं
चंदनंदिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुगन्धाय कलशेसंक्षिपाम्यहम् ॥
इतिगंधंक्षिपेत ॥४॥ ॐयाऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणा
महर्ठ० शतंधामानिसप्तच ॥ सर्वौषध्यः सुगन्धाढ्योदिव्यबृष्टिसमुद्भवाः ॥ कलशा-
प्यायन कराऽऔषधिः संक्षिपाम्यहम् ॥ इति सर्वौषधयः ॥५॥ ॐकांडात्काण्डात्प्र०
च ॥ दूर्वेऽअमृतसम्पन्नेशतमूलेशतांकुरे ॥ शतंमेहरपापानिशतमायुर्विवर्धिनी ॥ इति
दूर्वांकुरान् ॥६॥ ॐ अश्वत्थे वोनिषदनं पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किला-
सथयत्सनवथपूरुषम् ॥ यज्ञीयवृक्षसंभूतान्पल्लवान सरसान्छुभान् ॥ अलंकाराय
पंचैतान्कलशे संक्षिपाभ्यहम् ॥ इति पञ्चपल्लवान् ॥७॥ ॐ स्योनापृथिविनोभवानृक्ष

रानिवेशनी ॥ यच्छानः शर्मसप्रथाः॥८॥ अश्वस्थानाद्गजस्थाद्वल्मीकात्संगमाद्ध्रदात्॥ राजद्वाराद्गोकुलाच्चमृत्स्नांकलशेक्षिपते॥ इतिसप्तमृदः ॐयाःफलिनीर्याऽअफलाऽअपुष्पाऽयाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वꣳहसः ॥ इदं फलं मयादेवस्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ फलं मयासम्यक्संक्षिप्तं कलशेयतः ॥ तेनायंकलशः पूर्णःपूर्णासन्तुमनोरथाः इति पूगीफलम् ॥९॥ ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत ॥ दधद्रत्नानिदाशुषे ॥ रत्नगर्भाभवद्भूमीरत्नगर्भाढ्यभूधराः ॥ कलशेरत्नगर्भस्यात्तस्माद्रत्नान्यहं क्षिपेत् ॥ इति पञ्चरत्नानि॥ हिरण्यगर्भः समवर्तताग्रेभूतस्ययातः पतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवाय हविषाविधेम ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनन्तपुण्यफलदं कलशेसंक्षिपाम्यहम् ॥ इतिहिरण्यम् ॥११॥ ॐ सुजातो ज्योतिषासहशर्म्मवरूथमासदत्स्वः॥ वासोऽअग्नेविश्वरूपꣳ संव्ययस्वविभावसोः ॥ ११ ॥
शरण्यंसर्वलोकानां लज्जायारक्षणं परम् ॥ सुवेशधारवस्त्रंहि कलशेवेष्टयाम्य- राम

हम् ॥१२॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवव्विक्रीणाव हाऽइषमू-
र्जठं॰ शतक्रतो ॥ धान्यपूर्णमिदं पात्रं स्थापितं कलशेयतः ॥ तेनायंकलशःपूर्णः
पूर्णाः सन्तुमनोरथाः ॥ इति कलशोपरिपूर्णपात्रंन्यसेत् ॥१३॥ पा:फलिनी॰ हसः
मकरस्थं पाशहस्तमर्णसाम्पतिमीश्वरम् ॥ आवाहयेत्प्रतीचीशं वरुणंयादसां-
पतिं ॥ एषुचाक्षतपुंजेषु पूंगीफलसुमूर्तिषु ॥ पूजार्थे सुप्रतिष्ठावैसुप्रतिष्ठसुरेश्वर
इत्यस्मिन्कलशेवरुणं साङ्गंसपरिवारंसायुधं सशक्तिकंमावाहयामि ॥ अपाम्प
तयेवरुणायनमः ॥ इति पञ्चोपचारैर्वरुणंसंपूज्य ॥ ततोगंगाद्यवाहनम् ॥ कला
कलाहिदेवानां दानवानांकलाकलाः ॥ संगृह्यनिर्मितोयेन कलशस्तेनउच्यते ॥ कल-
शस्यमुखेविष्णुःकण्ठेरुद्रः समाश्रितः ॥ १ ॥ मूलेत्वस्यस्थितोब्रह्मामध्येमातृगणाः
स्मृताः ॥२॥ कुक्षौतुसागराः सप्तसप्तद्वीपाचमेदिनी ॥ अर्जुनीगोमतीचैवचन्द्र-
भागासरस्वती ॥३॥ कावेरीकृष्णवेणाच गंगाचैवमहानदी ॥ तापीगोदावरीचैव-

महान्द्दीनर्मदातथा ॥४॥ नदाश्चविविधायातानद्यः सर्वास्तथापराः ॥ पृथिव्यां यानितीर्थानि कलशस्थानितानिवै ॥५॥ सर्वेसमुद्रास्सरितस्तीर्थानिजलदानदाः ॥ आयान्तुममशान्त्यर्थं दुरितक्षयकारकाः ॥६॥ ऋग्वेदोथयजुर्वेदः सोमवेदोह्यथ वेदाः ॥ अंगैश्चसहितासर्वे कलशन्तुसमाश्रिताः ॥७॥ अत्रगायत्रीसावित्रीशांतिः पुष्टिःकरीतथा ॥ आयान्तुममशान्त्यर्थं दुरितक्षयकारकाः ॥८॥ यजमानः स्वहस्ते अक्षतान्गृहित्वां ॥ मनोजूतिर्जु०तिष्ठ ॥ कलशेवरुणाद्यावाहितदेवताः सुप्रतिष्ठिताः वरदाभवन्तु ॥ ॐ वरुणाद्यावाहितदेवताभ्योनमः ॥ विष्णवाद्यावाहितदेवताभ्यो नमः इतिवा ॥ आसनार्थे अक्षतान्समर्पयामि ॥ पादयोः पाद्यंस०॥ हस्तयोः अर्घ्यंस० आचमनंस० पञ्चामृतस्नानंस० ॥ शुद्धोदकस्नानंस० । स्नानांगाचमनंस० । वस्त्रंस० यज्ञोपवीतंस० । उपवस्त्रंस० । आच० । गन्धंस० । अक्षतान्स० । पुष्पमालांस० नानापरिमलद्रव्याणिस० ॥ कृतायाः पूजायाः सद्गुणतार्थेदक्षिणांस० । आर्ति-

क्यंस० । मंत्रपुष्पाञ्जलिंस० । प्रदक्षिणांस० । नमस्कारंस० । अनयापूजयावरु-
णाद्यावाहितदेवताः प्रीयंतांनमम ० अथप्रार्थना ॥ देवदानवसंवादे मथ्यमाने-
महोदधौ ॥ उत्पन्नोसितदाकुम्भविधृतो विष्णुनास्वयं ॥१॥ त्वत्तोयेसर्वतीर्थानि-
देवास्सर्वेत्वयिस्थिताः ॥ त्वयितिष्ठन्तिभूतानि त्वयिप्राणाः प्रतिष्ठिताः ॥ २ ॥
शिवस्वयंत्वमेवासिविष्णुस्त्वंच प्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपै-
तृकाः ॥ ३ ॥ त्वयितिष्टंन्तिसर्वेपियतः कामफलप्रदः ॥ त्वत्प्रसादादिमं यज्ञंकर्तु-
मीहेजलोद्भव ॥४॥ सान्निध्यंकुरुमेदेव प्रसन्नोभवसर्वदा ॥५॥ नमोनमस्तेस्फटिक
प्रभायसुश्वेतहारायं सुमंगलाय ॥ सुपाशहस्तायझषासनाय जलाधिनाथायन-
मोनमस्ते ॥६॥ पाशपाणेनमस्तुभ्यं पद्मिनीजीवनायक ॥ पुण्याहवाचनं यावत्ता
वत्त्वंसन्निधोभव ॥७॥ इति कलशप्रार्थना ॥ अथ पुण्याहवाचनम् ॥ अवनीकृत
जानुमण्डलकमलमुकुलसदृश मंजलिंशिरस्याधायानं तरंदक्षिणेनपणिनास्वर्ण-

पूर्णकलशंधारयित्वा आशिषः प्रार्थयेत् ॥ ८ ॥ दीर्घानागानद्योगिरयस्त्रीणि-
विष्णुपदानिच ॥ तेनायुः प्रमाणेनपुण्यं पुण्याहंदीर्घमायुरस्तु ॥ विप्राः अस्तु
दीर्घमायुः ॥ ॐ त्रीणिपदाविचक्रमे विष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन्॥
विष्णोः पद्भ्यां प्रक्रमेणारक्षाभवतिनिश्चला ॥ अतस्ताभ्योरक्षणाभ्यो धर्मान्स-
धारयेत्पुमान् ॥१॥ मार्कण्डेयप्रसादेन सुष्टूष्टचिरजीविनः ॥ तथात्वंभवदीर्घा-
युः पुत्रपौत्रगणैःसह ॥ २ ॥ दीर्घायुषश्चसूर्याद्यामहानद्यः सपर्वताः ॥ विष्णोः
पदप्रमाणेन दीर्घमायुरवाप्नुयात् ॥३॥ पुनः ॥ तेनायुः प्रमाणेन पुण्यं पुण्याहं
दीर्घमायुरस्तु इति भवन्तोब्रुवंतु इति यजमानः ॥२॥ पुण्यं पुण्याहं दीर्घमायुर
स्तु इति द्विजाः ॥ एवंद्विरपरं शिरसिभूमौनिनयेत् ॥ ब्राह्मणाः एवंसर्वत्र ॥
यज० ॥ सौमनस्यमस्तु इति पुष्पं ॥ विप्राः अस्तुसौमनस्यं ॥ यज० अक्षतंचा
रिष्टंचास्तु ॥ विप्राः अस्त्वक्षतमरिष्टंच ॥ यज० गन्धाःपान्तु ॥ विप्राः सुमंगल्यं

चास्तु ॥ यज० अक्षताःपान्तु ॥ विप्राः आयुष्यमस्तु ॥ यज० पुष्पाणिपान्तु-
विप्राः सौश्रेयमस्तु ॥ यज० सफलताम्बूलानिपान्तु ॥ विप्राः ऐश्वर्यमस्तु ॥ यज०
दक्षिणाःपान्तु ॥ विप्राः बहुधेयंचास्तु ॥ यज० दीर्घमायुःशान्तिः पुष्टिस्तुष्टिः
श्रीर्यशोविद्याविनयोर्वित्तंबहुपुत्रं बहुधनंचायुष्यंचास्तु ॥ विप्राः तथास्तु ॥
यंकृत्वासर्ववेदयज्ञक्रियाः करणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्तेतमहमोंकार
मादिं कृत्वाऋग्यजुः सामाथर्वाशीर्वचनंबहुऋषिमतंसमनुज्ञातं भवद्भिरनुज्ञातं
पुण्यंपुण्याहं वाचयिष्ये ॥ विप्राः वाच्यताम् ॥ अथऋक् ॥ ॐ द्रविणोदाद्र
विणसस्तु रस्यद्रविणोदाः सनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषन्नोद्रविणो
दारासते दीर्घमायुः ॥ १ ॥ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्स
विताधरात्तात् ॥ सवितानःसुवतुसर्वतातिं सवितानोरासतान्दीर्घमायुः ॥२॥ न-
वोनवोभवति जायमानोन्हाङ्के तुरुषसामेत्यग्रम् ॥ भागन्देवेभ्योविदधात्याय

न्प्रचन्द्रमास्थिरतेदीर्घमायुः ॥३॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्य्येऽअश्वदाः सहिते सूर्य्येण ॥ हिरण्यदाऽअमृतत्वम्भजन्तेवासोदाः सोमप्रतिरन्तऽआयुः ॥४॥ अथयजुः द्रविणोदाः पिपीषतिजुहोतऽप्रचतिष्ठत ॥ नेष्ट्राहतुभिरिष्यत ॥ १ ॥ सवितात्वा सवाना ठं० वतामग्निर्गृहपतीना ठं० सोमोव्वनस्पतीनाम् ॥ बृहस्पतिर्व्वाचइन्द्रो ज्यैष्ठ्यायरुद्रः पशुभ्योमित्रः सत्योव्वरुणो धर्मपतीनाम् ॥ २ ॥ नतद्रक्षा ठं० सिन पिशाचास्तरन्तिदेवानामोजः प्रथमजठं० ह्येतत् ॥ योविभर्तिदाक्षायणठं० ॥ हिरण्यठं० सदेवेषु कृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ उच्चाते जातमन्धसो दिविसद्भूम्याददे ॥ उग्रठं० शर्म्ममहिश्रवः ॥ ४ ॥ उपास्मैगायता नरः पवमानाएँ दवे ॥ अभिदेवाँ इयक्षते ॥ ५ ॥ अथसाम ॥ दे वो ३ वो ३ द्रविणोदाः । पूर्णां विवष्ट्वासिचम् । ऊर्ध्वा १ सिंचा २ । ध्वमुपवापृणध्वम् ॥ आदिद्वोदे २ । वहते । इडा २३ भा ३४६ । औ २३४५ हो इ । डा ॥१॥ अयदे-

नोवसवितः । श्रौ हो वा । इ ह श्रुधाई । प्रजाबा २३ त्सा । वी । सौभगां । परादू २३ ष्वा ३ । हा ३ हा । प्रिय ँ सू २३४५ वां ५५६ । दक्षा ३ या २३४५ ॥ २ ॥ चन्द्रमा हाउवा । प्सु वां तारा उवा सुवांताराउवा । सुपर्णोधाउवा । वतेदिवि । नवोहि राउवा । ण्यनाई मायाउवापद विन्दाउवा । तिविद्युताः । वित्तंमाश्राउवा । स्यरोदा २३ सा ३४३ यि । श्रो २३४५ ई । डा ॥ ३ ॥ उच्चारता ईजातमन्धसाः । दिवाइसा १ द्भू २ । मिया २३ ददाई । उग्राङ्शर्मा महा २३ इश्रवाउ । वा ३ । स्तौषे २३४५ ॥ ४ ॥ उपा ५ स्मै । गा ३ या ३ तानाराः पा ३ वामा ३ ना । या २३ श्रा । हु म्नाई । दा ३ वाई । श्राभिदेवाँ इया २ क्षताउ वा २३४५ ॥ ५ ॥ श्रथर्वणः ॥ धातारातिः सवितेदं जुषंताँ प्रजापतिर्निधिर्नोग्निः ॥ त्वष्टाविष्णुः प्रजयासंरराणोय जमानायद्रविणन्दधातु ॥ १ ॥ येनदेवः सवितारं परिदेवा श्रधारयन् । तेनेदं ब्रह्मणस्पते परिराष्ट्रावधत्तनं ॥ २ ॥ श्रहोरात्राभ्यां

नक्षत्रेभ्यः सूर्याचन्द्रमसाभ्याम् ॥ भद्राहमस्मभ्यं राजन्छकधूमत्वंक्त ॥ उच्चापतं
तमहर्णसुपर्णं मध्येदिवस्तरणम् ॥ भ्राजमानं पश्यामत्वासवितारं यमाहुरजस्त्रं
ज्योतिर्यदविदद्त्रिः ॥ ४ ॥ अथ पुराणोक्तमन्त्राः ॥ करोतुस्वस्तितेब्रह्मास्वस्तिं
चापिद्विजातयः ॥ सरीसृपाश्चयेश्रेष्ठास्ते भ्यस्तेस्वस्तिसर्वदा ॥१॥ ययातिर्नहुष-
श्चैवधुन्धुमारोभगीरथः ॥ तुभ्यराजर्षयः सर्वेस्वस्तिकुर्वन्तुनित्यशः ॥ २॥ स्वस्ति
तेस्तुद्विपादेभ्यश्चतुष्पादेभ्यएवच ॥ स्वस्त्यस्त्वपादकेभ्यश्चसर्वेभ्यः स्वस्तितेसदा
॥३॥ स्वाहास्वधाशचीचैवस्वस्तिकुर्वन्तुतेसदा ॥ करोतुस्वस्तिवेदादिनित्यंतवम-
हामखे ॥४॥ लक्ष्मीररुन्धतीचैवकुरुतां स्वस्तितेनघ ॥ असितोदेवलश्चैवविश्वा-
मित्रस्तथांगिरः ॥५॥ वसिष्ठः कश्यपश्चैवस्वतिकुर्वन्तुतेसदा ॥ धाताविधातालो-
केशोदिशश्चसदिगीश्वरः ॥६॥ स्वस्तितेद्यप्रयच्छन्तुकार्तिकेयश्चषरामुखम् ॥ विव-
स्वान्भगवान्स्वस्तिकरोतुतवसर्वदा ॥७॥ दिग्गजाश्चैवचत्वारः क्षितिश्चगगनं-

ग्रहाः ॥ अधस्ताद्धरणींचासौनागोधारयतेहिसः ॥८॥ शेषश्चपन्नगश्रेष्ठः स्वस्ति-
तुभ्यंप्रयच्छतु ॥ इत्येताऋचयः पुण्याहेब्रूयात् व्रतजपनियमतपस्वाध्यायक्रतु-
शमदमदयादानविशिष्टानां सर्वेषां ब्राह्मणानांमनः समाधीयताम् ॥ इतियज-
मानः ॥ समाहित मनसस्मः इब्राह्मणाः ॥ प्रसीदन्तुभवन्तः इति यज० । प्रसं-
नास्मः इति ब्राह्म० । ततोयजमानोब्रूयात् ॥ शान्तिरस्तुइत्यादि ॥ अस्तुइति
द्विजाः प्रतिवचनं सर्वत्रदद्युः ॐ शान्तिरस्तु ॥ १ ॥ ॐ पुष्टिरस्तु ॥ २ ॥ ॐ
तुष्टिरस्तु ॥ ३ ॥ ॐ वृद्धिरस्तु ॥ ४ ॥ ॐ अविघ्नमस्तु ॥ ५ ॥ ॐ आयुष्यमस्तु
॥ ६ ॥ ॐ आरोग्यमस्तु ॥ ७ ॥ ॐ शिवमस्तु ॥ ८ ॥ ॐ शिवकर्मास्तु ॥ ९ ॥
ॐ कर्मसमृद्धिरस्तु ॥१०॥ ॐ धर्मसमृद्धिरस्तु ॥ ११ ॥ ॐ वेदसमृद्धिरस्तु ॥ १२ ॥
ॐ शास्त्रसमृद्धिरस्तु ॥ १३ ॥ ॐ धनधान्यसमृद्धिरस्तु ॥ १४ ॥ ॐ पुत्रपौत्रसमृ-
द्धिरस्तु ॥ १५ ॥ ॐ इष्टसंपदस्तु ॥ १६ ॥ ॐ अरिष्टनिरसनमस्तु ॥ १७ ॥ वहिः ॐ

यत्पापंरोगं अशुभंअकल्याणं तद्दूरेप्रतिहतमस्तु ॥ १८ ॥ अंतः ॐ यच्छ्रेयस्तदस्तु ॥१९॥ ॐ उत्तरेकर्मणिनिर्विघ्नमस्तु ॥२०॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥२१॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां ॥२२॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रह लग्नसंपदस्तु ॥२३॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥२४॥ ॐ तिथिकरणेसमुहूर्तेसनक्षत्रेसग्रहेसलग्नेसाधिदैवतेप्रीयेताम् ॥२५॥ ॐ दुर्गापाञ्चाल्यौप्रीयेताम् ॥२६॥ ॐ अग्निपुरोगाविश्वेदेवाः प्रीयन्ताम् ॥२७॥ ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम् ॥२८॥ ॐ वसिष्ठपुरोगाः ऋषिगणाः प्रीयंताँम् ॥२९॥ ॐ माहेश्वरीपुरोगाः उमामातरः प्रीयंतांम् ॥३०॥ ॐ अरुन्धतीपुरोगाः एकपत्न्यः प्रीयंताँम् ॥३१॥ ॐ विष्णुपुरोगाः सर्वेदेवाः प्रीयंतांम् ॥३२॥ ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् ॥३३॥ ॐ ब्रह्मच ब्राह्मणाश्चप्रीयंताम् ॥३४॥ ॐ श्रीसरस्वत्यौ-प्रीयेताम् ॥३५॥ ॐ श्रद्धामेधेप्रीयेताम् ॥३६॥ ॐभगवतिकात्यायनीप्रीयताम् ॥३७॥

ॐ भगवतिमाहेश्वरीप्रीयताम् ॥३८॥ ॐ भगवतिऋद्धिकरीप्रीयताम् ॥ ३९ ॥ ॐ भगवतिवृद्धिकरीप्रीयताम् ॥४०॥ ॐ भगवतिपुष्टिकरीप्रीयताम् ॐ भगवतितुष्टिकरीप्रीयताम् ॥४१॥ ॐ भगवन्तौविघ्नविनायकौ प्रीयेताम् ॥४२॥ ॐ सर्वाःकुलदेवताः प्रीयंताम् ॥४३॥ ॐ सर्वाः ग्रामदेवताः प्रीयंताम् ॥४४॥ ॐ सर्वाःइष्टदेवताःप्रीयंताम् ॥४५॥ बहिः ॐ हताश्चब्रह्मद्विषः ॥४६॥ ॐ हताश्चपरिपन्थिनः ॥४७॥ ॐ हताश्चविघ्नकर्तारः शत्रवः पराभवंयान्तु ॥४८॥ ॐ शाम्यन्तुघोराणि ॥४९॥ ॐ शाम्यन्तुपापानि ॥५०॥ ॐ शाम्यन्त्वितयः ॥५१॥ ॐ शाम्यन्त्युपद्रवाः ॥५२॥ अन्तः ॐ शुभानिवर्धन्ताम् ॥ ॐ शिवाआपः सन्तु ॥५३॥ ॐ शिवाऋतवः सन्तु ॥५४॥ ॐ शिवाओषधयः सन्तु ॥५५॥ ॐ शिवावनस्पतयः सन्तु ॥५६॥ ॐ शिवाअतिथयः सन्तु ॥५७॥ ॐ शिवाग्नयः सन्तु ॥५८॥ ॐ शिवाहुतयःसन्तु ॥५९॥ ॐ अहोरात्रेशिवेस्याताम् शम्बः कनिक्रदद्देवः पर्जन्योऽअभिवर्षत्वोषधयः प्रतिधीयताम् ॥ शन्नोद्यावापृथिवी

शंप्रजाभ्यः शन्नोऽस्तुद्विपदेशंचतुष्पदे ॥ अथयजुः ॥ निकामेनिकामेनः पर्जन्यो
वर्षतुफलवत्योनऽओषधयः पच्यन्तां योगक्षेमोनः कल्पताम् ॥ अथसाम ॥ त्वष्टा
३४ नोदैवियम्बचाः पर्जन्योब्रह्मणस्पा २३ तीः। पुत्रैर्भ्रातृभिरदितिर्नुपातु ॥२३॥ नाः
दुष्टारा २३ त्रामणं २३ बाचाउ ३४३।३२३४५। इडा ॥ अथर्वणः ॥ गणास्त्वोपगायन्तु
मरुताः पर्जन्यघोषिणः पृथक् । सर्गावर्षस्यवर्षतोवर्षतुपृथिवीमनुः ॥ शुक्राङ्गा
रकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहित आदित्यपुरोगाः सर्वेग्रहाः प्रीयन्ताम्
भगवान्नारायणः प्रीयताम् ॥ भगवान्पर्जन्यः प्रीयताम् ॥ भगवान्स्वामीमहासेनः
प्रीयताम् ॥ पुरोनुवाक्यायायत्पुण्यन्तदस्तु याज्ययायत्पुण्यन्तदस्तु ॥ वषट्
कारेणयत्पुण्यन्तदस्तु ॥ प्रातःसूर्योदयेयत्पुण्यन्तदस्तु ॥ यज० एतत्कल्याणयुक्तं
पुण्यं पुण्याहं वाचयिष्ये ॥ विप्राः ॥ वाच्यताम् ॥ ब्राह्म्यंपुण्यं महर्यच्चसृष्ट्यु-
त्पादनकारकम् ॥ वेदवृक्षोद्भवंनित्यं तत्पुण्याहं ब्रुवन्तुनः ॥ भोब्राह्मणाः ममस

कुटुम्बस्य सपरिवारस्यगृहेऽमुकाख्यस्यकर्मणः पुण्याहंभवन्तोब्रुवन्तु ॥ ३ ॥ ॐ
पुण्याहम् इतित्रिवारंब्राह्मणाःवदन्ति ॥ अथऋक् ॥ उद्गातेवशकुनेसामगायसि
ब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेवाजीशिशुमतीरपीत्यासर्वतोनः शकुनेभद्रमा-
वदविश्वतोनः शकुनेपुण्यमावद ॥१॥ अथयजुः ॥ पुनन्तुमादेवजनाः पुनन्तुमनसा-
धियः पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ अथसाम ॥ पुनानः सोमाः ३ धारा
२३४ याऽपापोवसानो अर्षस्यारत्नधायोनिमृतस्यसा २ इदसाइ ओहा उवा ॥
उत्सोदेवोहिराहाई । उहा ३ उवा । ययया । औ ३ होवा । हो ५ ई । डा ॥१॥ अथर्वणः॥
पुनन्तुमादेवजना पुनन्तुमनवोधिया ॥ पुनन्तुविश्वाभूतानिपवमानः पुनातुमा ॥
अ० पुराणमं० दीयन्तेयत्रदानानि पूज्यन्तेच द्विजातयः ॥ दृश्यते तत्रमांगल्यं
तत्पुण्याहंसदास्तुते ॥ पृथिव्यामुद्धृतायान्तुयत्कल्याणंपुराकृतम् ॥ ऋषिभिः
सिद्धिगन्धर्वैस्तत्कल्याणं ब्रुवन्तुनः ॥ भोब्राह्मणाः मयाक्रीयमाणस्य अमुकाख्य

स्यकर्मणः कल्याणंभवन्तोब्रुवन्तु ॥ ॐ कल्याणं ॥३॥ अथ ऋक ॥ अपाःसोममस्त-
मिन्द्रप्रयाहि कल्याणीर्जायासुरणङ्गृहेते ॥ यत्रारथस्यबृहतो निधानम्विमोच-
नम्बाजिनोदक्षिणावत् ॥ अथयजुः ॥ ॐ यथेमांवाचङ्कल्याणीमावदानिजनेभ्यः ॥
ब्रह्मराजन्याभ्यार्ठ० शूद्रायचार्यायच स्वायचारणायच ॥ प्रियोदेवानान्दक्षिणा-
यैदातुरिह भूयासमयं मेकामः समृध्यतामुपमादोनमतु ॥ अथसाम ॥ का३ ५ या।
नश्चा ३ त्रा ३ आभूवात् । ऊतीसदावृधः स । खा । औ ३ हो हाइ । कया २३ श्चा
इष्टयौहो ३। हुम्मा २। वा २ र्तौ ३५ हाइ ॥ ८॥ अथर्वणः ॥ विश्वजित्कल्याण्यै
मापरिधेहि कल्याणिद्विपाच्चसर्वन्तोरक्ष चतुष्पाद्यच्चनस्वम् ॥ पुराणमन्त्राः ॥
कलत्रपुत्रपौत्रादिद्विपदाश्च चतुष्पदाः ॥ तिष्ठन्तियत्रभृत्याद्यस्तत्कल्याणं सदा
स्तुते ॥२॥ सागरस्यतुयाऋद्धिर्महालक्ष्म्यादिभिःकृता ॥ सम्पूर्णास्युः प्रभावाच
तांऋद्धिं प्रब्रुवन्तुनः ॥ भोब्राह्मणाः मयाक्रीयमाणस्य अमुकाख्यस्यकर्मणः ऋद्धिं

भवन्तोब्रुवन्तु ॥ ॐ कर्मऋध्यताम् ॥ अथऋक् ॥ ॐ ऋध्यामस्तोमं सनुयाम
वाजमानोमंत्रं सरथेहोपयातम् ॥ यशीनपक्कं मधुगोष्वन्तराभूताँशोऽअश्विनोः
काममप्राः ॥ अथयजुः ॥ सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताऽअभूम् ॥ दिवंपृथि
व्याऽअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ॥ अथसाम ॥ औ २ हो वा औ हो
वा औ हो ३ वा । आगन्मज्योतिः आगन्मज्योतिः । अगन्मज्योतिः अमृता
अभूमअमृताअभूम ॥ अमृता अभूमातरिक्षंपृथिव्या अध्यारुहामा ॥२॥ तरिक्षं
पृथिव्या अध्यारुहामदिवमन्तरिक्षा दध्यारुहामः ॥३॥ अविदानदेवान् ॥ ३ ॥
समुद्देवैरगन्महि ॥३॥ औ हो वा औ हो वा औ हो३वा सुवर्ज्योती २३४५ ॥६॥
अथर्वणः ॥ ऋधग्मन्त्रोयोनिंय आवभूवामृतासुवर्द्धमानः ॥ सुजन्माअदब्धासु-
भ्राजमानोऽहेवत्रितो धर्तादोधरत्रीणि ॥ पुराणमंत्रः ॥ धनधान्यधराधर्मनिधि
कोशगृहाणि च ॥ ध्रुवाणियत्रतिष्ठन्तिसाऋद्धिः सर्वदास्तुते ॥ स्वस्तिस्तुयाविना

शाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रियान्नित्यंतांचस्वस्तिंब्रुवन्तुनः ॥ भोब्रा
ह्मणाः अमुकाख्यस्यकर्मणोस्वस्त्यै० ब्रुवन्तु ३। आयुष्मतेस्वस्ति ॥ अथऋक् ॥
स्वस्तिऋद्धिप्रपथेश्रेष्ठारेकूण स्वस्त्यभियावाममेति सानोऽअमासोऽअरणेनिपातु
स्वावेशा भवतुदेवगोपाः ॥ अथयजुः ॥ स्वस्तिनइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा-
विश्ववेदाः स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ अथसाम ॥
त्रातारमिन्द्रमविता। रमी २३ न्द्राम्। हवे हवे सुहव ९ शू। रमी २३ न्द्राम्।
हुवाईईनुशक्रंपुरुहू। तमी २३ न्द्राम्। इ द ९ स्वस्तिनोमघवा। वा ३४३ यि।
तू ३वा ५ यिन्द्रा ६५६ः ॥१०॥ अथर्व० स्वस्तिमात्रउतपित्रेणोअस्तु स्वस्तिगोभ्यो
जगतोपुरुषेभ्यः। विश्वंसुभूतसुविदत्रन्नोअस्तुज्योगेवदृशेमसूर्यं ॥ अथपुराणमंत्राः
यद्भूज्जानकीं भैष्मीजानकी गिरिजास्तुवः ॥ युधिष्ठरेच भूपालेस्वस्तिभवति-
सर्वदा ॥ मृकण्डसूनोरायुर्य ध्रुवलोमशयोस्तथा ॥ आयुषातेनसंयुक्ताजीवेमश

रदःशतं ॥१॥ जीवन्तुभवन्तः ॥ अथऋक् ॥ शतञ्जीवशरदोवर्द्धमानः शतंहेमन्ता
ञ्छतमुपत्रासतान् ॥ शतमिन्द्राग्नीसवितावृहस्पतिः शतायुषाहविषेमम्पुनर्दुः ॥
अथयजुः ॥ शतमिन्नुशरदोऽअन्तिदेवा यत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोय
त्रपितरोभवन्तिमानोमध्यारी रिषतायुर्गन्तोः ॥ अथसाम ॥ हाउ । ३ । यशो-
हाउ । ३ । वर्चोहाउ । ३ । आस्मिन् हायि । २। आस्मिन् हा ३१ उ । वा २ ।
तवदिन्द्रावमवसु । त्वंपुष्पसिमध्यमं। सत्राविश्वस्य परमस्यराजसि । नकिष्ट्वागो
वृवृण्वते । हाउ । ३ । यशोहाउ ।३। वर्चोहाउ ।३ आस्मिन् हा ३१ उ । वा २
आयुर्विश्वं विश्वमायूरशीमहि प्रजात्वष्टरधिनिधेह्यस्मैशतंजीवेमशरदोवयंते
२३४५ ॥ अथर्वणः ॥ आयुरस्मै धेहिजातवेदः प्रजांत्वष्टरधिनिधेह्यस्मै ॥ राय-
स्पोषं सवितरासुवास्मैशतञ्जीवातिशरदस्तथायम् ॥ शिवगौरीविवाहेयायाश्री-
रामेनृपात्मजे ॥ धनदस्यगृहे याश्रीरस्माकं सास्तुसद्मनि ॥ अस्तुश्रीः ॥ अथ

ऋक् ॥ श्रियेंजातः श्रियऽआनिरियाय: श्रियम्वयोजरितृभ्योदधातिश्रियम्वसा-
नाऽअमृतत्वमायन् भवन्तिसत्यसमिथामितद्रौ ॥ अथयजुः ॥ ॐ मनसः काममा-
कूतिम्वाचः सत्यमशीय ॥ पशूनार्ठ० रूपमन्नस्यरसोयशः श्रीः श्रयतांमयिस्वाहा
॥ अथसाम ॥ आयन्तइवसू ४ रायां विश्वा २। ईदिन्द्रास्यभाक्षातावा सूनिजातो
जनिमानियोजासा । प्रतिभागंनदी २ धिमः । प्रा २३ ती । भागांना ३ दा हुं ।
धीमा ३ । ओ २३४ वाश्रिये ॥१२॥ अथर्वणः ॥ राहयातुवरुणः सोमोऽअग्निबृ-
हस्पतिर्वसुभिरेहयातु ॥ अस्यश्रियमुपसंयातसर्वउग्रस्यचेतुरः संमनः सजाता ॥
प्रजापतिर्लोकपालोधाताब्रह्माचदेवराट ॥ भगवाञ्छाश्वतोनित्यन्नोवैरक्षन्तुसर्वतः
भगवान्प्रजापतिः प्रीयताम् ॥ अथऋक् ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजाता
निपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयं स्यामपतयोरयीणाम् ॥ रामः
अथयजुः ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरितावभूव ॥ यत्कामास्ते ॥ २१

जुहुमस्तन्नोऽअस्त्वयममुष्य पितासावस्य पितावयठं॰ स्यामपतयोरयीणाठं॰ स्वाहा
अथसाम ॥ हाउ ।३। इमाः ।३। प्रजाः ॥३॥ प्रजापतेहोई ।२। प्रजापतेहा ३१ उ ।
वा २ । एहृदयम् । २ । ए हृदया ३१ उ । वा । प्रजारूपमजीजने ३ । इटइडा
२३४५ ॥१३॥ अथर्वणः ॥ प्रजापतेरावृतोब्रह्मणावर्म्मणाहं कश्यपस्यज्योतिषाव-
र्चसाचजरदष्टिः कृतवीर्योविहायाः सहस्रायुः सुकृतश्चरेयं ॥ आयुष्मतेस्वस्तिमते
यजमानायदाशुषे ॥ श्रीयेदत्ताशिषः सन्तुऋत्विग्भिर्वेदपारगैः ॥ ॐ आयुष्मते-
स्वस्ति ॥ अथऋक् ॥ स्वस्तयेवायुमुपब्रुवामहैसोमं स्वस्तिभुवनस्ययस्पतिः ॥
बृहस्पतिं सर्वगणंस्वस्तये स्वस्तऽआदित्यासोभवन्तुनः ॥ अथयजुः ॥ प्रतिपन्था-
मपद्महिस्वस्तिगामनेहसम् ॥ येनविश्वाः परिद्विषोवृणक्तिविन्दतेवसु ॥ अथ
साम ॥ ई य इ या ३ हायि । त्य मू षुवाजिना ३ न्देवजूतं । ईऽ४ य ई या ।
हायि । सहो वा नन्ता । रूताइ । रँ रथानां । इ य इ या ३ हाई । अरिष्टा ३ नायिमि ३

य. शा. स्पृत । नाजमाशुम् । ई ४ य इ या । हा २३४५ यि । स्वस्त । यायि । तार्क्ष्यमिहा
॥ २३ ॥ ३४३ । हू ३ वा ५ यिमा ५६६ ॥ अथर्वणः ॥ वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशु-
र्वेदिंपरशुर्नः स्वस्तिर्हविष्कृतो यज्ञियायज्ञकामास्ते देवासोयज्ञमिमं युषताम् ॥
ॐ स्वस्तिवाचनसमृद्धिरस्तु ॥ कृतस्यस्वस्तिवाचनकर्मणः समृध्यर्थंस्वस्तिवाच-
केभ्योब्राह्मणेभ्योइमांदक्षिणांविभज्यदातुमहमुत्सृजे ॥ अथाभिषेकः ॥ अभिषे-
केपत्नीवामतः एकस्मिन्पात्रेवरुणोदकंगृहीत्वाऽविधुराश्चत्वारोब्राह्मणाः दूर्वाम्र-
पल्लवैः सकुटुंबंयजमानमभिषिंचेयुः तन्मन्त्राः ॥ ॐ पयः पृतिव्यां० ॥ १ ॥ ॐ
पञ्चनद्यः० ॥ २ ॥ ॐ वरुस्योत्तं ॥ ३ ॥ ॐ पुनन्तुमा० ॥ ४ ॥ ॐ देवस्यत्वा-
सवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यंत्रियेदधामि-
बृहस्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ ५ ॥ देवस्यत्वा० ॥ सरस्वत्यैवाचो
यन्तुर्यंत्रेणाग्नेःसाम्राज्येनाभिषिंचामि ॥ ६ ॥ देवस्यत्वा० ॥ अश्विनोर्भैषज्येन-

रामः

॥ २३

तेजसेब्रह्मवर्चसायाभिषिंचामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंचामीन्द्र-
स्येन्द्रियेणबलायश्रियैयशसेभिषिंचामि ॥७॥ ॐ विश्वानिदेवसवितर्दुरितानिपरा-
सुव ॥ यद्भद्रन्तन्नऽआसुव ॥८॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ सचेतसो
विश्वेदेवायज्ञंप्रावंतुनःशुभे ॥ ९ ॥ त्वंयविष्ठदाशुषोनॄँःहेपाहिशृणुधीगिरः ॥ रक्षा-
तोकमुतत्मना ॥ ११ ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंता-
रिषऽऊर्ज्जंनोधेहिद्विपदेचतुष्पदे ॥ १२ ॥ द्यौः शान्तिरंत० ॥ १३ ॥ यतोयतः
स० ॥ १४ ॥ अमृताभिषेकोस्तु इतिपुण्याहवाचनप्रयोगः ॥ अविघ्नोमंडपश्चैव-
मातृणांपूजनंसकृत् ॥ वैश्वदेवंवसोर्द्धारांनांनीश्राद्धमतः परम् ॥ विवाहोपन-
यनचूडाकर्णसीमंतोन्नयनादौ मोदश्चैवप्रमोदश्चसुमुखोदुर्मुखस्तथा ॥ अविघ्नो-
विघ्नहर्त्ताचषडैतेविघ्ननायकाः ॥ ॐ मोदायनमः मोदंआ० ॥ १ ॥ ॐ प्रमोदा-
य० प्रमोदं आ० ॥२॥ ॐ सुमुखाय० सुमुखं आ० ॥३॥ दुर्मुखाय० दुर्मुखं० ॥४॥

अविघ्नाय० ॥ ५ ॥ अविघ्नं आ० ॥ ६ ॥ विघ्नहर्त्रे० विघ्नहर्तारं० ॥ आ० ॐ मोदा-
य. शा. दिषड्विनायकेभ्योनमः इति पूजयेत् ॥ मण्डपमध्येए कस्मिन्कलशे आवाहयेत् इति
॥ २५ ॥ अविघ्नपूजनं ॥ अथ मण्डपदेवताप्रतिष्ठा ॥ ततोमंण्डपार्थंस्तंभारोपणं तद्यथा ॥
ॐ देवस्यत्वास० भ्यांइत्यभ्रिमादत्ते ॥ १ ॥ ॐ इदमहगूँरक्षसांग्रीवाऽअपिकृंतामि
इत्यवटंपरिलिखिति ॥ २ ॥ ॐ मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपाच्च-
तुष्पादस्माकगूँ सर्वमस्त्वनातुरम् इतिखनति ॥३॥ ॐ सिंचंतिपरिषिंचंत्युत्सिंचं
तिपुनंतिच ॥ सुरायैबभ्र्वैमदेकिंत्वोवदतिकिंत्वः इति तस्मिन्नवटेअपः आसिंचति
॥४॥ ॐयवोसियवयास्मद्द्वेषोयवयारातीः॥इतियवानावपति॥५॥दर्भसिद्धार्थकांस्तू-
ष्णीमावपति॥ॐकांडात्कां० चइतिदूर्वांकुरान्॥६॥ॐदधिक्राव्णो० तुइतिदधि ॥७॥
ॐ याः फलीनी० सः इतिफलम् ॥८॥ ॐ हिरण्यगर्भः० म इतिहिरण्यंचावपति राम:
॥ ९ ॥ ॐ उच्छ्रयस्ववनस्पत ऊर्ध्वोमापाह्य गूँ हसऽआस्ययज्ञस्योद्दृचः ॥ इति ॥ २५ ॥

मन्त्रेणरक्तसूत्रबद्धमदनफलसमन्वितस्तंभोत्थापनं ॥ १० ॐ ऊर्ध्वऽ ऊषुणऽ
ऊतयेतिष्ठादेवोनसविता ॥ ऊर्द्धोवाजस्यसनितायदंजिभिर्वाघद्भिर्विह्वयामहेइ-
त्यवटेरोपणं ॥ ॐ स्थिरोभववीड्वंगऽ आशुर्भववाज्यर्वन् ॥ पृथुर्भवसुखदस्त्व-
मग्नेः पुरीषवाहणः ॥ इतिसमंततोमृत्पूर्णेन स्थिरकरणं ॥ तस्मिन्स्तंभे ॥ ॐ
नलिन्यैनमः ॥१॥ ॐ नन्दिन्यै१ ॥२॥ ॐ मैत्रायै० ॥३॥ ॐ उमायै० ॐ पशुव-
र्द्धिन्यै० ॥५॥ ॐ मनोजूतिष्ठमंडपदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु इति प्रति-
ष्ठाप्य ॥ ॐ मंडपदेवताभ्योनमः इति षोडशोपचारैरभ्यर्चनं ॥ मंडपदेवताप्री-
त्यर्थं यथाशक्तिब्राह्मणान्भोजयिष्ये ॥ अत्रशिष्टाचारएवशरणं । मंडपप्रति-
ष्ठातुसीमंतोन्नयनान्नप्राशनचूडाकरणोपनयनवेदारंभकेशांतव्रतविसर्गविवाहेषु-
कार्या ॥ तत्रैवमंडपसत्वात् मंडपस्तंभनिवेशनंतु ॥ वृषाद्राशित्रयेस्थितेसूर्येसति
आग्नेयांकार्यम् ॥ सिंहाद्राशित्रयेईशान्याम् ॥ वृश्चिकाद्राशित्रयेवायव्यां ॥

कुंभाद्राशित्रयेनैर्ऋत्यां ॥ इतिमंडपदेवताप्रतिष्ठा ॥ अथमातृकापूजनं अथाग्नेयां प्रतिमास्वक्षतपुंजेषुवाप्राक् संस्थमुदक् संस्थंवामातृस्थापनं ॥ ॐ भूर्भुवः स्वः गणपतये० ॥ गणपतिं आवाहयामिस्थापयामि ॥ ॐ भूर्भुव स्वः गौर्यै न०॥ गौरीमा० ॥ २ ॥ ॐ पद्मायै० ॥ पद्माम् ॥ ३ ॥ ॐ शच्यै० ॥ शचीं ॥ ४ ॥ ॐ मेधायै० ॥ मेधां ॥५॥ ॐ सावित्र्यै० ॥ सावित्रीं ॥६॥ ॐ विजयायै० ॥ ॐ विजयां० ॥७॥ ॐ जयायै० ॥ जयां० ॥८॥ ॐ देवसेनायै० ॥ देवसेनां० ॥९॥ ॐ स्वधायै० स्वधां० ॥ ॐ स्वाहायै० ॥ स्वहां० ॥११॥ मातृभ्यो० ॥ मातृः ॥ १२ ॥ ॐ लोकमातृभ्यो० ॥ लोकमातृः० ॥१३॥ धृत्यै० ॥ धृतिमा० ॥१४॥ ॐ पुष्ट्यै० ॥ पुष्टिं०॥ १५ ॥ ॐ तुष्ट्यै ॥ तुष्टिं ॥ १६ ॥ ॐ आत्मनः कुलदेवतायै० ॥ आत्मनः कुलदेवतां ॥१७॥ ॐ मनो० ष्ठ० ॥ गौर्याद्याःकुलदेवतांताः मातरोगणपतिसहिताः सुप्रतिष्ठिताः वरदाः भवंतु ॥ ॐ गणपत्यादि कुलदेवतांतमातृभ्योनमः इत्य-

भ्यर्चनं ॥ चूडाकरणोपनयनविवाहेषुयथाकुलाचारंमातृभांडस्थापनं ॥ अथव-
सोर्द्धारापूजनं ॥ ॐ वसोःपवित्रमसिशतधारं वसोःपवित्रमसिसहस्रधारम् ॥
देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वा ॥ नमोस्तुवसुमातृभ्योघृतमा-
तृभ्यएवच ॥ स्वयज्ञकार्यसिध्यर्थं धारांदास्यामिमातरः ॥१॥ इतिमन्त्रेणघृतेनपं
चसप्तवाप्राक्संस्थाउदक्संस्थावावसोर्द्धाराकर्तव्याः ॐ कामधुक्षः ॥ श्रियादिसप्त
मातृभ्योघृतमातृभ्यएवच ॥ गुड़ेनमेलयिष्यामिताः सर्वार्थप्रसाधिकाः ॥ इत्येता
वतामन्त्रेणार्धभागेगुड़ेनैकीकरणं कुंकुमादिनाविन्दुकरणेनालंकरणं प्रतिधारामे-
कैकदेवतामावाहयेत् ॥ ॐश्रीयैनमः ॥ श्रियमा० ॥१॥ ॐलक्ष्म्यैन० ॥ लक्ष्मीमा०
॥२॥ ॐ धृत्यै० ॥ धृतिमा० ॥३॥ ॐ मेधायै० ॥ मेधामा० ॥४॥ ॐ स्वाहायै० ॥
स्वाहां० ॥५॥ ॐ प्रज्ञायै० ॥ प्रज्ञामा० ॥६॥ ॐ सरस्वत्यै० ॥ सरस्वतीमा० ॥७॥
ॐ श्रीलक्ष्मीधृतिमेधास्वाहाप्रज्ञासरस्वतीभ्योनमइत्यर्चनं ॥ ॐ वसोर्धारादेव-

ताभ्योनमइतिवाह्णावाह्य ॥ ॐ मनो० वसोर्द्धा\दिवताः सुप्रतिष्ठिताः वरदाः
भवन्तुसंपूज्यप्रार्थयेत् ॥ यदंगत्वेनभोदेव्यः पूजिताविधिमार्गतः ॥ कुर्वन्तुकार्य-
मखिलंनिर्विघ्नेनक्रतूद्भवं ॥ अनयापूजयावसोर्द्धारादेवताः प्रीयंतां० ॥ इतिवसो-
र्द्धाराकरणं ॥ अथायुष्यमन्त्रजपः ॥ ॐ आयुष्यंवर्चस्य गूँ रायस्पोषमौद्भिदम् ॥
इदं गूँ हिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम् ॥१॥ न तद्रक्षा सि० यु: ॥२॥ यदा-
वध्नंदाक्षायणाहिरण्य गूँशतानीकायसुमनस्यमानाः ॥ तन्मआबध्नामिशतशा-
रदायायुष्मान्जरदष्टिर्यथासम् ॥ पुराण० यदायुष्पंचिरंदेवाः ॥ सप्तकल्पांतजीविषु ॥
ददुस्तेनायुषास्मभ्यकूजीवेमशरदःशतम् ॥१॥ दीर्घानागानगानद्योनंतस्समुद्राणंवादि-
शः अनंतेनायुषातेन जीवेमशरदः शतम् ॥२॥ सत्यानिपंचभूतानि विनाशरहितानि
च ॥ अविनाश्या युषातद्वज्जीवेमशरदः शतम् ॥ ३ ॥ इत्यायुष्यमंत्रजपः ॥ रामः
अथ सांकल्पेनविधिनानांदीश्राद्धप्रोगः ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नांदी- ॥ २९ ॥

मुखाः भूर्भुवः स्वः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॐ अमुकगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनं पादप्रक्षालनंवृद्धिः ॥२॥ ॐ अमुकगोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ ३ ॥ ॐ अमुक-गोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नांदीमुखाः भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ ४ ॥ आसनदानं ॥ सतयव सुसंज्ञकाः विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॐ अमुकगोत्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इमे आस-नेवोनमोनमः ॥ २ ॥ ॐ अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इमे आसनेवोनमोनमः ॥ ३ ॥ ॐ अमुकगोत्राः मातामहप्रमा-तामहवृद्धप्रमातामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः इमे आसनेवोन-

मोनमः ॥ ४ ॥ गन्धादिदानं विश्वेदेवादि ॥ गन्धपुष्पधूपदीपताम्बूलपूगीफल-
वस्त्रज्ञोपवीतानिदद्यात् ॥ ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः
इदङ्गंधाद्यर्चनं स्वाहासंपद्यतांवृद्धिः ॥ १ ॥ ॐ अमुकगोत्राः मातृपितामहिप्र-
पितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं गन्धाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ २ ॥
ॐ अमुकगोत्राः पितृपितामहप्रपितामहाः नन्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्य-
र्चनंस्वाहा संपद्यतांवृद्धिः ॥ ३ ॥ ॐ अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमा-
तामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्यर्चनंस्वाहा संपद्यतांवृ-
द्धिः ॥ ४ ॥ ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्म-
ब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ १ ॥
ॐ अमुकगोत्राः मातृपितामहिप्रपितामह्यः नान्दीमुख्यः भूर्भुवः स्वः इदं युग्म-
ब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ २ ॥

ॐ अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्म-ब्राह्मणभोजनपर्याप्तमान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेणस्वाहा संपद्यतांवृद्धिः॥३॥ ॐ अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तमान्ननिष्क्रयभूतं द्रव्यं अमृतरूपेण-स्वाहा संपद्यतांवृद्धिः ॥ ४ ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयंतां ॥ १ ॥ गोत्राः मातृपितामहिप्रपितामह्यः नांदीमुख्यः प्री-यंतां ॥ २ ॥ गोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः प्रीयंतां ॥ ३ ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः नांदीमुखाः प्री-यंताम् ॥ ४ ॥ शिवा आपः संतु ॥ सौमनस्यमस्तु ॥ अक्षतं चारिष्टं चास्तु अघोराः पितरः सन्तु इतिपूर्वाग्रांजलधारांदद्यात् ॥ ततः कृतांजलिः प्रार्थयेत् ॐ गोत्र न्नोवर्धतांदातारोनोभिवर्धतांवेदाः संततिरेवच ॥ श्रद्धाचनोमाव्यगमद्व

य. शा. हुदेयंचनोस्तु श्रद्धांचनोमाव्यगमद्बहुदेयंचनोस्तु अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनः संतुमाचयाचि
॥ ३२ ॥ ष्मकंचन ॥ एताः सत्याश्चाशिषः संतु ॥ संत्वेतासत्याः आशिषः इति ॐ सत्यव
सुसंज्ञकाः विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः कृतस्य नांदीश्राद्धस्य फलप्रति-
ष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणांदातुमहमुत्सृजे ॥ १ ॥ ॐ अ-
मुकगोत्राः मातृपितामहिप्रपितामह्यः नांदीमुख्यः भूर्भुवः स्वः कृतस्य
नांदीश्राद्धस्य फलप्रतिष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमु-
त्सृजे ॥ २ ॥ ॐ गोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भुवः स्वः कृ-
तस्य नांदीश्राद्धस्य फलप्रतिष्ठासिध्यर्थं द्राक्षामलकयवमूलनिष्क्रयणींदक्षिणां-
दातुमहमुत्सृजे ॥३॥ ॐ गोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः रामः
नान्दीमुखाः भूर्भुवः स्वः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिध्यर्थं द्राक्षामलकय-
वमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ ४ ॥ ॐ उपास्मैगायतानरः पव- ॥ ३२ ॥

मा।न।ऽएन्दवे ॥ अभिदेवाँऽइयक्षते ॥ १ ॥ इडामग्नेपुरुद गूँ स गूँ सनिंगोः शश्वत्तमगूँ हवमानायसाध॥ स्यान्नः सूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे २ अनेननांदीश्राद्धंसंपन्नम्॥ सुसंपन्नं तेनश्रीकर्मांगदेवताः प्रीयंतांवृद्धिः॥ विश्वेदेवाः प्रीयंतां ॥ ॐ वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वं तृप्यतयातपथिभिर्देवयानैः इति विसृज्य ॐ आमावाजस्य प्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागन्तांपितरामातराचामासोमो-अमृतत्वेनगम्यात् ॥ इति नान्दीश्राद्धप्रयोगः ॥ अथाचार्यादिवरणम् ॥ उदङ्मु-खमाचार्यमुपवेश्यगन्धादिभिः संपूज्य ॥ ॐ अमुकगोत्रोत्पन्नः अमुकप्रवरा-न्वितः अमुकशर्मायजमानोहं अमुकगोत्रोत्पन्नं अमुकप्रवरान्वितं शुक्लयजुर्वे-दान्तर्गतवाजसनेयमाध्यंदिनीयशाखाध्यायिनं अमुकशर्माणंब्राह्मणं अस्मिन्ग्रह शांत्याख्येकर्मणिएभिर्वरणद्रव्यैः आचार्यत्वेनत्वामहंवृणे ॥ वृतोस्मि इति प्रति-

हृदेयंचनोस्तु अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनः संतुमाचयाचि
ष्मकंचन ॥ एताः सत्याआशिषः संतु ॥ संत्वेतासत्याः आशिषः इति ॐ सत्यव
सुसंज्ञकाः विश्वेदेवाः नांदीमुखाः भूर्भुवः स्वः कृतस्य नांदीश्राद्धस्य फलप्रति-
ष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणांदातुमहमुत्सृजे ॥ १ ॥ ॐ अ-
मुकगोत्राः मातृपितामहिप्रपितामह्यः नांदीमुख्यः भूर्भुवः स्वः कृतस्य
नांदीश्राद्धस्य फलप्रतिष्ठासिध्यर्थंद्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमु-
त्सृजे ॥ २ ॥ ॐ गोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भुवः स्वः कृ-
तस्य नांदीश्राद्धस्य फलप्रतिष्ठासिध्यर्थं द्राक्षामलकयवमूलनिष्क्रयणींदक्षिणां-
दातुमहमुत्सृजे ॥३॥ ॐ गोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकाः
नान्दीमुखाः भूर्भुवः स्वः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिध्यर्थं द्राक्षामलकय-
वमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ ४ ॥ ॐ उपास्मैगायतानरः पव-

मानाऽएन्दवे ॥ अभिदेवाँऽइयक्षते ॥ १ ॥ इडामग्नेपुरुद गूँ स गूँ सनिंगोः शश्वत्तमगूँ हवमानायसाध॥ स्यान्नः सूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे २ अनेननांदीश्राद्धंसंपन्नम्॥ सुसंपन्नं तेनश्रीकर्मांगदेवताः प्रीयंतांवृद्धिः॥ विश्वेदेवाः प्रीयंतां ॥ ॐ वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वं तृप्यतयातपथिभिर्देवयानैः इति विसृज्य ॐ आमावाजस्य प्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागन्तांपितरामातराचामासोमो-अमृतत्वेनगम्यात् ॥ इति नान्दीश्राद्धप्रयोगः ॥ अथाचार्यादिवरणम् ॥ उदङ्मुखमाचार्यमुपवेश्यगन्धादिभिः संपूज्य ॥ ॐ अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकशर्मायजमानोहं अमुकगोत्रोत्पन्नं अमुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गतवाजसनेयमाध्यंदिनीयशाखाध्यायिनं अमुकशर्माणंब्राह्मणं अस्मिन्ग्रह शांत्याख्येकर्मणिएभिर्वरणद्रव्यैः आचार्यत्वेनत्वामहंवृणे ॥ वृतोस्मि इति प्रति-



वचनं ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्ना-
चार्योभवसुव्रत ॥ १ ॥ अस्मिन् ग्रहशांत्याख्येकर्मणिएभिर्वरणद्रव्यैः अमुकगो-
त्रममुकशर्माणं ब्राह्मणं ब्रह्मत्वेनत्वामहंवृणे॥ वृतोस्मि ॥ यथाचतुर्मुखोब्रह्मासर्व-
लोकपितामहः ॥ तथात्वंममयज्ञेस्मिन् ब्रह्माभवद्विजोत्तम ॥ २ ॥ अस्मिन्०
सदस्यत्त्वेनत्वामहं वृणे ॥ भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ विततेममयज्ञेस्मि
न्सदस्योभवसुव्रत ॥ ३ ॥ अस्मिन्० गाणपत्यत्वेनत्वामहंवृणे ॥ वांछितार्थ-
फलावप्त्यैपूजितोसिसुरासुरैः ॥ निर्विघ्नंक्रतुसंसिध्यैत्वामहंगणपंवृणे ॥ ४ ॥
अस्मिन्० उपद्रष्टत्वेनत्वा महंवृणे ॥ भगवन्सर्वधर्मज्ञसर्वधर्मपरायण ॥ वितते मम
यज्ञेस्मिन्नुपद्रष्टाभवद्विज ॥ ५ ॥ अस्मिन्० ऋत्विक्त्वेनत्वामहंवृणे ॥ भगवन्सर्वध-
र्मज्ञसर्वधर्मपरायण । वितते मम यज्ञेस्मिन्नृत्विक्त्वंमेमखेभव ॥ ६ ॥ ॐ व्रतेनदी-
क्षामाप्नोतिदीक्षयाप्नोतिदक्षिणां ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते अथ

करसंपुटंकृत्वासर्वान्प्रार्थयेत् अस्मिन्कर्मणियेयेतुवृतागुरुमुखादयः ॥ सावधानाः प्रकुर्वन्तुस्वंस्वंकर्मयथोदितं ॥ १ ॥ अस्ययागस्यनिष्पत्तौभवन्तोभ्यर्थितामया ॥ सुप्रसन्नैः प्रकर्तव्यंकर्मेदंविधिपूर्वकम् ॥ २ ॥ यथाविहितंकर्मकुरु ॥ यथाज्ञानंकरवाणि इत्याचार्यादिवरणं आचार्यः आचम्यप्राणानायम्य ॥ देशकालौसंकीर्त्य-अस्मिन्ग्रहशांत्याख्येकर्मणियजमानेनवृ तोहंआचार्यकर्मकरिष्ये० आचार्योवा-महस्तेगौरसर्षपान् गृहीत्वादिग्रक्षणंकुर्यात् तत्रमंत्राः रक्षोहणंबलगहनंवैष्णवी-मिदमहंतंबलगमुत्किरामियम्मेनिष्ट्योयममात्योनिचखानेदमहंतंबलगमुत्किरामि-यम्मेसमानोयमसमानोनिचखानेद महंतंबलगमुत्किरामियम्मेसबन्धुर्यमसबन्धुर्नि चखानेदमहंतंबलगमुत्किरामियम्मेसजातोयमसजातोनिच खानोत्कृत्याङ्किरामि ॥ १ ॥ रक्षोहणोवोबलगहनः प्रोक्षामिवैष्णवान्रक्षोहणोवोबलगहनोवनयामिवै ष्णवान्रक्षोहणोवोबलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांबलगहनाऽउपदधा-

मिव्वैष्णावीरक्षोहणौवांब्बलगहनौपर्यूहामिव्वैष्णावीव्वैष्णावमसिव्वैष्णवास्थ ॥२॥ रक्ष-
सांभा गोसिनिरस्त गूँ॰रक्षऽइदमह गूँ॰रक्षोभितिष्ठामीदमह गूँ॰ रक्षोबबाधऽइदमह
गूँ॰ रक्षोधमन्तमोनयामि ॥ घृतेनद्यावापृथिवीप्रोर्णुवाथांबायोवेस्तोकानामग्नि-
राज्यस्यव्वेतु स्वाहा स्वाहा कृतेऽऊर्द्ध्वनभसंमारुतंगच्छतम् ॥ ३ ॥ रक्षोहाविश्व-
चर्षणि रभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ ४ ॥ यदत्रसंस्थितंभूतंस्थानमा-
श्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ १ ॥ अपसर्पंतुतेभूतायेभ-
भूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ २ ॥ अप क्रामंतु-
भूतानिपिशाचास्सर्वतोदिशम् ॥ सर्वेषामविरोधेनशांतिकर्मसमारभेत् ॥ ३ ॥ भू-
तानिराक्षसावापियेत्रतिष्ठन्तिकेचन ॥ तेसर्वेप्यपगच्छन्तुग्रहयागंकरोम्यहं ॥ ४ ॥
इति तिष्ठन् पूर्वादिदिक्षुविकिरेत् उदकोपस्पर्शः ततः पञ्चगव्यकरणं ॥ गाय-
त्र्यागोमूत्रं ॥ गंधद्वारेतिगोमयम् ॥ ॐ गंधद्वारांदुराधर्षां नित्यपुष्टांकरी-

षिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेतिपयः ॐ
आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ३ ॥ दधि-
क्राव्ण इतिदधि ॐ दधिक्राव्णो० ॥ ४ ॥ ॐ तेजोसीत्याज्यं ॐ तेजो-
सिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टन्देवयज नमसि ॥ ५ ॥
देवस्यत्वेतिकुशोदकं ॐ देवस्यत्वा० ॥ ६ ॥ ॐ प्रणवेनयज्ञकाष्ठेनालो
ड्यआपोहिष्ठेतित्रिभिर्मंत्रैः कर्मभूमिंयज्ञसंभारांश्चप्रोक्षयेत् ॥ ततः कृतांजलिः
स्वस्तिन० ॥ २ ॥ इतिमन्त्रद्वयं पठेत्० भूमौप्रादेशंकृत्वा देवाः आयांतु० या तु-
धानामपयांतु० विष्णोर्देवयजनं रक्षस्व ततःसर्वतोभद्रदेवतास्थापनंपूजनंसर्वतो-
भद्रेकलशस्थापनविधिनाकलशंसंस्थाप्यकलशेप्रधानप्रतिमांसंस्थाप्यविधिनापूज
येत् ॥ ततोग्निस्थापनं कुण्डेस्थंडिलेवा ॥ कुण्डंचेत्उपरिमेखलायां श्वेतवर्णंवि-
ष्णुंपूजयेत् इदंवि० इतिमन्त्रेण ॥ मध्यमेखलायांरक्तवर्णंब्रह्मयज्ञा० इतिमं०

ब्रह्माणंसंपूज्य ॥ अधोमेखलायांकृष्णवर्णनमस्तै० इति रुद्रंसंपूज्य अम्बेअंबि०
इतिमं० योन्यांरक्तवर्णांगौरींपूजयेत् ॥ अस्मिन् ग्रहशांत्याख्येकर्मणिपंचभूः सं-
स्कारपूर्वकमग्निस्थापनं करिष्ये ॥ दर्भैः परिसमुह्य० गोमयोदकेनोपलिप्य ॥
स्रुवेणोल्लिख्य ॥ अनामिकाङ्गुष्ठेनोधृत्य ॥ उदकेनाभ्युक्ष्य ॐ अग्निंदूतमित्य-
ग्निंस्थापयेत् ॥ अथ सूर्यादिग्रहाणांस्थापनक्रमः ॥ ईशानेमण्डलंकृत्वाग्रहाणां-
स्थापनंततः ॥ वृत्तमंडलमादित्यंअर्धचन्द्रंनिशाकरं ॥ त्रिकोणंमंगलंचैवबुधं च
धनुषाकृतिं ॥ गुरुमष्टदलंप्रोक्तंचतुःकोणं च भार्गवं ॥ नराकृतिंशनिंविद्याद्राहुं
च मकराकृतिं ॥ केतुंखड्गसमंज्ञेयंग्रहमंडलकेशुभे ॥ १ ॥ अथवा ॥ वृत्तमंडल-
मादित्यं चतुरस्रंनिशाकरं ॥ त्रिकोणंमंगलचैवबुधेवैवाणसन्निभम् ॥ गुरवेपद्टि-
शाकारं पंचकोणंभृगुस्तथा मन्देचधनुषाकारं शूर्पाकारंतुराहवे ॥ केतवेचध्वजा-
कारंमंडलानिक्रमेणतु ॥ शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यौउदङ्मुखौ ॥ प्रत्यङ्मुखौ

शनी सोमौशेषादक्षिणतोमुखाः ॥ मध्येतुभास्करंविंद्याच्छशिनंपूर्वदक्षिणे ॥
दक्षिणेलोहितंविंद्याबुधंपूर्वोत्तरेणतु ॥ उत्तरेणगुरुंविंद्यात्पूर्वेणैवतुभार्गवम् ॥
पश्चिमेतुशनिंविंद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतंकेतुंइत्येषाग्रहसंस्थितिः
आदित्याभिमुखास्सर्वेसाधिप्रत्यधिदेवताः ॥ अधिदेवतादक्षिणेवामेप्रत्यधिदेव
ताः ॥ अरुणौसूर्यभौमौचश्वेतशुक्रौनिशाकरौ ॥ हरितवर्णौबुधश्चैवपीतवर्णोगुरु-
स्तथा ॥ कृष्णवर्णौशनीराहुः केतवस्तुतथैव च ॥ ततः पूर्वनिर्मितग्रहवेद्यांश्वेत-
वस्त्रंप्रसार्यनवग्रहमंडलंविलिख्यमध्यादिकोष्टेषु उक्तदिक्षुविदिक्षुसूर्यादिग्रहाणां-
स्थापनंपूजनं च कुर्यात् । अथ सूर्याद्यावाहनं ॐ आकृष्णेनरजसावर्तमानोनि-
वेशयन्नमृतंमर्त्यंच ॥ हिरण्मय येनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥
ॐ भूर्भुवः स्वः कलिं गदेशोद्भवकाश्यपसगोत्ररक्तवर्णभोसूर्यइहागच्छइहतिष्ठसू-
र्यायनमः सूर्यमावाहयामिस्थापयामि ॥ १ ॥ ॐ इमन्देवाऽअसपत्न गूँ॰ सुवध्वं-

महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येंद्रियाय ॥ इममभुष्यपुत्रममु-
 ष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणाना गूँ राजा ॥ २ ॥ ॐ भू०
यमुनातीरोद्भवआत्रेयसगोत्रशुक्लवर्णाभोसोमइहागच्छेहतिष्ठसोमायनमः सोममा-
वाहयामिस्थापयामि ॥ २ ॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥
अपा गुँ० रेता गुँ० सिजिन्वति ॥ ॐ भू० अवंतिकापुरोद्भवभारद्वाजसगो-
त्ररक्तवर्णाभोभौमइ० भौमाय० भौमं० ॥ ३ ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमि-
ष्टापूर्तेस गुँ० सृजेथामयं च ॥ अस्मिन्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्च
सीदत ॥ ॐ भू० मगधदेशोद्भवआत्रेयसगोत्रहरितवर्णभोबुधइ० बुधाय० बुधमा०
॥ ४ ॥ ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवस
ऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भवआंगिरससगोत्रपी
तवर्णाभोबृहस्पतेइ० बृहस्पतये० बृहस्पतिं० ॥ ५ ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्म-

ग्राव्यपिवत्क्षत्रंपयः सोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपान गूँ० शुक्रमंधस ऽइन्द्रस्येन्द्रियमिदंपयोमृतंमधु ॐ भू० भोजकटदेशोद्भवभार्गवसगोत्रशुक्लवर्णभो- शुक्रइ० शुक्राय० शुक्रं० ॥ ६ ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शं- य्योरभिस्रवंतुनः ॐ भू० सौराष्ट्रदेशोद्भवकाश्यपसगोत्रकृष्णवर्णभोशनैश्चरइ० शनैश्चराय० शनैश्चरं० ॥ ७ ॥ ॐ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कया शचिष्ठयावृता ॐ भू० राठिनापुरोद्भवपैठिनसगोत्रकृष्णवर्णभोराहोइ० राहवेन० राहुं० ॥ ८ ॥ ॐ केतुंकृण्वंनकेतवेपेशोमर्याऽअपेशसे ॥ समुखद्भिरजायथाः ॐ भू० अंतर्वेदिसमुद्भवजैमिनसगोत्रकृष्णवर्णभोकेतोइ० केतवे० केतुं० ॥ ९ ॥ ततो धिदेवतास्थापनंग्रहदक्षिणपार्श्वे ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् ॥ उर्वारु- कमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भू० ईश्वरेहा० ईश्वराय० ईश्वरं० ॥ १ ॥ ॐ श्रीश्चते० ॥ ॐ भू० उमेहा० उमायै० उमां० ॥ २ ॥ ॐ यदक्रंदःप्रथमजा-

यमानऽउद्यन्त्समुद्रादुतवापुरीखात् ॥ श्येनस्य पक्षाहरिणस्यबाहू उपस्तुत्यंमहि
यातन्ते ऽर्वन् ॐ भू० स्कदेहा० स्कंदाय० स्कंन्दं० ॥ ३ ॥ ॐ विष्णोरराटमसि-
विष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥
ॐ भू० विष्णोइ० विष्णवे० विष्णुं० ॥ ४ ॥ ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजा-
यतामाराष्ट्रेराजन्यः शूरइषव्योतिव्याधीमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वाना-
शुः सप्तिः पुरंधिर्योषाजिष्णूरथेष्ठाः ॥ सभेयोयुवास्ययजमानस्यवीरोजायतांनि-
कामेनिकामेनः पर्जन्योवर्षतुफलवत्योनऽॐ षधयः पच्यंतांयोगक्षेमोनः कल्प-
ताम् ॐ भू० ब्रह्मन् इ० ब्रह्मणे० ब्रह्माणं० ॥ ५ ॥ ॐ सयोषाऽइन्द्रसगणोमरुद्भिः
सोमंपिब वृत्रहा शूरविद्वान् ॥ जहिशत्रूँ २ रपमृधोनुदस्वाथाभयंकृणुहिविश्व-
तोनः ॐ भू० इन्द्रेहा० इन्द्राय० इन्द्रं० ॥ ६ ॥ ॐ यमायत्वांगिरस्वते पितृमते-
स्वाहास्वाहाघर्मायस्वाहाघर्मः पित्रे ॥ ॐ भू० यमइ० यमाय० यमं० ॥ ७ ॥

ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरो-
षधीः ॐ भू० कालेहा० कालाय० कालं० ॥ ८ ॥ ॐ चित्रावसोस्वस्तितेपारम-
शीय ॐ भू० चित्रगुप्तेहा० चित्रगुप्ताय० चित्रगुप्तं० ॥ ९ ॥ ततः प्रत्यधिदेवता-
स्थापनंग्रहवामपार्श्वे ॐ अग्निन्दूतंपुरोदधेहव्यवाहमुपब्रुवे॥देवांऽआसादयादिह॥
ॐ भू० अग्नेइ० अग्नये० अग्निं० ॥ १ ॥ ॐ आपोहिष्ठा० ॐ भू० अपइहागच्छत-
इहतिष्ठतअद्भ्योन० अपः आ० ॥ २ ॥ ॐ स्योनापृथिवि० ॐ भू० पृथिविइ०
पृथिव्यै० पृथिवीं० ॥ ३ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा
गुँ० सुरेस्वाहा ॐ भू० विष्णोइ० विष्णवे० विष्णुं० ॥४॥ ॐ इन्द्र आसान्नेताबृह-
स्पतिर्दक्षिणायज्ञः पुरऽएतुसोमः॥ देवसेनानामभिभंजतीनांजयन्तीनांमरुतोयंत्व-
ग्रम् ॐ भू० इन्द्रेहा० इन्द्राय० इन्द्रं० ॥ ५ ॥ ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥
पूषासिघर्मायदीष्व ॐ भू० इन्द्राणिइ० इन्द्राण्यै० इन्द्राणीं० ॥ ६ ॥ ॐ प्रजाप-

तेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवय गुं॰
स्यामपतयोरयीणाम् ॐ भू॰ प्रजापतेइ॰ प्रजापतये॰ प्रजापतिं॰ ॥ ७ ॥ ॐ नमो-
स्तुसर्पेभ्योयेके च पृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॐ भू॰ सर्पाः
इहागच्छतइहतिष्ठत॰ सर्पेभ्यो॰ सर्पान्॰ ॥ ८ ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसी-
मतः सुरुचोवेनआवः ॥ सबुध्न्याउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॐ
भू॰ ब्रह्मनइ॰ ब्रह्मणे॰ ब्रह्माणं ॥ ९ ॥ ततोविनायकादिपंचलोकपालदेवताः वा-
स्तोष्पतिंक्षेत्रपालंचावाहयेत् ॐ गणानांत्वा॰ ॐ भू॰ गणपतेइ॰ गणपतये॰ गण-
पतिं॰१ ॐ अंबेऽअंबिके॰ ॐ भू॰ दुर्गेइ॰ दुर्गायै॰ दुर्गां२ ॐ वायोजेतेसहस्रिणो-
रथासस्तेभिरागहि ॥ नियुत्वान्सोमपीतये ॐ भू॰ वायोइ॰ वायवे॰ वायुं॰३ ॐ
घृतंघृतपावानः पिबतवसांवसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदि
शऽआदिशोविदिशऽउद्दिशोदिग्भ्यः स्वाहा॰ ॐ भू॰ आकाशइहा॰ आकाशा॰

श्राकाशं० ४ ॐ यावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षताम् ॐ भू० अश्विनौ इहागच्छतं इहतिष्ठतं अश्विभ्यांनमः अश्विनौआवाहयामि० ५ ॐ वास्तोष्पतेप्रतियानीह्यस्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोयुषस्व-शन्नोभवद्विपदेशंचतुष्पदे ॥ ॐ भू० वास्तोष्पतेइ० वास्तोष्पतये० वास्तोष्पतिं० ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनम-वृधन्नमृताअम-र्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः ॐ भू० क्षेत्राधिपतेइ० क्षेत्राधिपतये० क्षेत्राधिप-तिमावा० ७ अथमंडलाद्वाह्ये दशदिक्पालानावाहयेत् ॐ त्रातारमिन्द्रमवितारमि-न्द्रगूँ० हवेहवे सुहव गूँ०शूरमिन्द्रम्। हूयामिशक्रंपुरुहूतमिन्द्र गुँ०स्वस्तिनोमघवा-धात्विन्द्रः भू.इन्द्रेहा.इन्द्राय.इन्द्रं ॥ ॐत्वन्नोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्व-श्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेष गूँ०रक्षमाणास्तवव्रते ॐ भू०अग्नेइ० अग्नये० अग्निं० २ ॐ यमायत्वांगिरस्वतेपितृ० ॐ भू० यमेहा० यमाय यमं० ३ ॐ

असुंन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ८ अन्यमस्मदिच्छसातऽइ-
त्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ भू निर्ऋतेइ० निर्ऋतये० निर्ऋतिं० ४ ॐ तत्वा-
यामि० ॐ भू० वरुणइ० वरुणाय० वरुणं० ५ ॐ आनोनियुद्भिः शतिनीभिरध्वर
गूँ० सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्सवनेमादयस्वयूयम्पातस्वस्ति-
भिः सदानःवायोइ० वायवे० ॐ वयुं० ६ ॐ वय गूँ० सोमव्रतेतवमनस्तनूषुविभ्रतः
प्रजावन्तः सचेमहि ॥ ॐ भू० सोमेहा० सोमाय ५ सोमं० ७ ॐ तमीशानंज० ॐ
भू० इशानेहा० ईशानाय० ईशानं० ८ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहू
तौसयोषाः ॥ यः श गूँ० सतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माऽअवन्तुदेवाः ॥
पूर्वेशानयोर्मध्ये ॥ ॐ भू० ब्रह्मन्इ० ब्रह्मणे० ब्रह्माणं० ॥९॥ ॐ स्योनापृथिवि० नि-
र्ऋतिपांश्चमयोर्मध्ये ॥ ॐ भू अनन्तेहा० अनन्ताय० अनन्तं० ॥१०॥ ॐ मनो-
जूतिर्जु० ॐ सूर्यादिअनन्तांत देवताः सुप्रतिष्ठिताः वरदाःभवन्तु ॥ सूर्यादिअ-

नन्तानन्तदेवताभ्योनम इति मन्त्रेण आसना द्युपचारैः प्रत्येकमेकत्रवाक्कांडानु-
समयेनपदार्थानुसमयेनवाषोडशोपचारैः संपूज्यप्रार्थयेत् ॥ ग्रहाऽऊर्ज्जाहुतयोव्यं-
न्तोविप्रा यमतिम् ॥ तेषांविशिप्रियाणांवोहमिषमूर्ज गूँ. समग्रभमुपयामगृही-
तोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजु ष्टतमम्॥ ग्रहस्येशानदिग्भ गे
कलशस्थापनविधिनारुद्रकलशंसंस्थाप्यकलशेवरुणंअसंख्यातरुद्रांश्चावाह्यपूजये-
त् ॥ ॐ असंख्याता सहस्राणियेरुद्रा ऽअधिभूम्याम् ॥ तेषागुँ. सहस्रयोजनेवध-
न्वानितन्मसि ॥ असंख्यातरुद्रेभ्यो० असंख्यातरुद्रा ना० अथ कुशकंडिकाकर-
णं ॥ अग्नेर्दक्षिणतोब्रह्मासनं ॥ अग्नेरुत्तरतः प्रणीतासनद्वयं ॥ ब्रह्मासनेब्र-
ह्मोपवेशनं ॥ यावत्कर्मसमाप्यतेतावत्त्वंब्रह्माभव ॥ भवामीतिप्रतिवचनम् ॥
ब्रह्मानुज्ञातः प्रणीताप्रणयनं ॥ प्रणय ॥ ईशानादिपूर्वाग्रैः कुशैः परिस्तरणं ॥
आग्नेयादीशानान्तं ॥ ब्रह्मणोग्निपर्यंतं ॥ नैर्ऋत्याद्वायव्यान्तं ॥ अग्नितः प्रणी-

तापर्यंतं ॥ अथपात्रासादनं ॥ पश्चादुत्तरतोवास्यात् ॥ त्रीणिपवित्रेद्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्गकुशाःपंच ॥ उपयमनकुशाःसप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यं ॥ तण्डुलाः ॥ पूर्णपात्रं ॥ वृषनिष्क्रयदक्षिणा ॥ उपकल्पनीयानिद्रव्याणिनिधाय ॥ पवित्रछेदनानि ॥ द्वयोरुपरित्रीणिनिधाय ॥ द्वौमूलेनप्रदक्षिणीकृत्य ॥ त्रिभिश्छिद्य ॥ द्वौग्राह्यौ त्रिस्त्याज्यः ॥ प्रोक्षणीपात्रेप्रणीतोदकमासिच्य ॥ त्रिः पूर्णं ॥ पवित्राभ्यामुत्पवनं ॥ प्रोक्षण्याःसव्यहस्तकरणं ॥ दक्षिणेनोद्दिङ्गनं ॥ प्रणीतोदकेनप्रोक्षणीनांप्रोक्षणं ॥ प्रोक्षण्युदकेनआज्यस्थाल्याः प्रोक्षणं ॥ चरुस्थाल्याः प्रो० ॥ संमार्गकुशानांप्रो० ॥ उपयमनकुशानांप्रो० ॥ समिधांप्रो० ॥ स्रुवस्यप्रो० ॥ आज्यस्यप्रो० ॥ तण्डुलानांप्रो० ॥ पूर्णपात्रस्यप्रो० ॥ उपकल्पनीयानांपदार्थानांप्रो० ॥ असंचरेनिधानं ॥ प्रणीताग्न्योर्मध्ये ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यांप्रणीतोदका-

सेकपूर्वकं तण्डुलप्रक्षेपः ॥ ब्रह्मादक्षिणात ऽऽाज्याधिश्रयणं ॥ चरोरधिश्रयण-
माज्यस्योत्तरतः ॥ ज्वलदुल्मुकेनोभयोः पर्यग्निकरणं ॥ इतरथावृत्तिः ॥ उद-
कोपस्पर्शः ॥ अधश्रितेचरौ अधोमुखस्य स्रुवस्य प्रतपनं ॥ संमार्गकुशैः स्रुवस्यो-
र्ध्वमुखस्यसंमार्जनं ॥ बुध्न्यादारभ्यकुशैरग्रपर्यंतंसंमृज्य अग्रादारभ्य अधस्ता-
न्मूलैर्मूलांतं ॥ प्रणीतोदकेनाभ्युक्षणं ॥ पुनःप्रतपनं ॥ दक्षिणदेशेनिधानं ॥ आ-
ज्योद्वासनं ॥ चरुपूर्वेणानी याग्नेरुतरस्तः स्थापयेत् ॥ चरोरुद्वासनं ॥ अग्नेरु-
त्तरतएवाज्यंप्रदक्षिणीकृत्यआज्यस्योत्तरतः चरुंस्थापयेत् ॥ आज्योत्पवनं ॥ आ-
ज्यावेक्षणं ॥ अपद्रव्यनिरसनं प्रोक्षण्युत्पवनं ॥ उपयमनकुशादानं ॥ तिष्ठत्स-
मिदाधानं ॥ प्रोक्षण्युदकेनसपवित्रहस्तेनईशानादिअग्नेः प्रदक्षिणंपर्युक्षणं ॥ प-
वित्रयोः प्रणीतासुनिधानं ॥ दक्षिणंजान्वाच्य ॥ ब्रह्मणाकुशैरन्वारब्धः ॥ स्रुवे-
णाज्यहोमः ॥ अग्नेरुत्तरभागे ॥ ॐ प्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥

अग्नेर्दक्षिणभागे ॥ ॐ इन्द्रायस्वाहा इदमिंद्रायनमम ॥ समिद्धतमेग्नी ॥ ॐ अ-
ग्नयेस्वाहा ॥ इदमग्नयेनमम ॥ ॐ सोमायस्वाहा ॥ इदंसोमायनमम ॥ ततः सू-
र्यादिग्रहाणांअधिदेवताप्रत्यधिदेवतागणपत्यादिपंचलोकपालदेवतानांइन्द्रादिद-
शदिक्पालदेवतानांचप्रत्येकंसमित्तिलचर्वाज्यद्रव्यैः अष्टोत्तरसहस्रमष्टोत्तरशतम-
ष्टाविंशतिमष्टौवाजुहुयात् ॥ अस्मिन्ग्रहशांतिकर्मणिइमानिहवनीयद्रव्याणिया-
यायक्ष्मायादेवतास्ताभ्यस्ताभ्यः मयापरित्यक्तंनमम ॥ यथादैवतमस्तु ॥ इति
कुशकंडिकाकरणं ॥ अथसूर्यादिनवग्रहाणां प्रणवादिस्वाहांत होममन्त्राः ॥ ॐ
गणानांत्वा० घम् स्वाहा ॐ अम्बेऽअ० नीम् स्वाहा ॥ १ ॥ ॐ आकृष्णे० प-
श्यन् स्वाहा ॥ १ ॥ ॐ इमन्दे वाअ० राजा स्वाहा ॥ २ ॥ ॐ अग्निर्मू० न्त
तिस्वाहा ॥३॥ ॐ उद्बुध्य० सीदतस्वाहा ॥ ४ ॥ ॐ बृहस्प० चित्रमूस्वाहा ॥५॥
ॐ अन्नात्प० मधुस्वाहा ॥ ६ ॥ ॐ शन्नोदे० तुनःस्वाहा ॥ ७ ॥ ॐ कयान०

मृतास्वाहा ॥८॥ ॐ केतुङ्कृ० यथास्वाहा ॥ ९ ॥ त्र्यम्बकं० मृतात्स्वाहा ॥१०॥
श्रीश्चते० इषाणस्वाहा ॥ ११ ॥ यदक्रन्दः० अर्वन्स्वाहा ॥ १२ ॥ विष्णोरराo
वेत्वास्वाहा ॥ १३ ॥ आब्रह्म० ताम्स्वाहा ॥ १४ ॥ सजोषा० तोनःस्वाहा ॥ १५ ॥
यमायत्वां० पित्रेस्वाहा ॥ १६ ॥ कार्षिर० षधीःस्वाहा ॥ १७ ॥ चित्राव० शीय-
स्वाहा ॥ १८ ॥ अग्निन्दू० दिहस्वाहा ॥ १९ ॥ आपोहि० यचक्षसेस्वाहा ॥ २० ॥
स्योनापृ० प्रथाःस्वाहा ॥२१॥ इदम्बि० सुरेस्वाहा ॥२२॥ इन्द्रआ० ग्रमूस्वाहा॥२३॥
अदित्यै० दीष्वस्वाहा ॥ २४ ॥ प्रजापते० णाम्स्वाहा ॥ २५ ॥ नमोस्तुस० नमः
स्वाहा ॥ २६ ॥ ब्रह्मय० विवःस्वाहा ॥ २७ ॥ गणाना० धम्स्वाहा ॥ २८ ॥ अ-
म्बेऽअ० नीम्स्वाहा ॥ २९ ॥ वायोजेते० तयेस्वाहा ॥ ३० ॥ घृतंघृत० दिग्भ्यः
स्वाहा ॥ ३१ ॥ यावांक० तामस्वाहा ॥ ३२ ॥ वास्तोष्पते० ष्पदेस्वाहा ॥ ३३ ॥
नहिस्पश० देवाः स्वाहा ॥ ३४ ॥ त्रातारमि० स्त्विन्द्रः स्वाहा ॥ ३५ ॥ त्वन्नोअग्ने०

य. श्रा० व्रतेस्वाहा ॥ ३६ ॥ यमायत्वां० पित्रेस्वाहा ॥ ३७ ॥ असुन्वंत० मस्तुस्वाहा ॥ ३८ ॥
॥ ४२ ॥ तत्वाया० मोषीः स्वाहा ॥ ३९ ॥ आनोनि० क्षांनः स्वाहा ॥ ४० ॥ वयगूं. सो०
महिस्वाहा ॥४१॥ तमीशानं० स्तयेस्वाहा ॥४२॥ अस्मेरुद्रा० देवाः स्वाहा ॥४३॥
स्योनापृ० प्रथाः स्वाहा ॥ ४४ ॥ ततः प्रधानहोमः ॥ प्रधानहोमानन्तरं ब्रह्मा-
दिमण्डलदेवताभ्य एकैकयाज्याहुत्यायक्षेशेषेणस्विष्टकृदादिहोमः ॐ अग्नेनय-
सुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो-
भूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १ ॥ ॐ स्वाहा स्वधायुताग्नयेवैश्वानरायनम
इतिमंत्रेणाग्निंसंपूज्य ॥ ततोहुतशेषद्रव्यंगृहीत्वा ॥ ब्रह्मणान्वा रब्धः स्विष्टकृ-
द्धोमंकुर्यात् ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ ततोभू-
राद्विनवाहुतयः ॥ ॐ भूः स्वाहा ॥ इदमग्नयेनमम ॥ ॐ भुवः स्वाहाः ॥ इदं राम:
वायवेनमम ॐ स्वःस्वाहा ॥ इदं सूर्यायनमम ॥ ॐ त्वन्नोऽग्नेवरुणस्यविद्वा- ॥ ४२ ॥

न्देवस्यहेडो ऽअवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमः शोशुचानोविश्वाद्वेषा गु
सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ॐ सत्वन्नोऽग्नेवमोभवो-
तीनेदिष्ठो ऽअस्या ऽउषसोव्युष्टौ ॥ अवयक्ष्वनोविरुणठं. रराणोवीहिमृडीकगूं. सु-
हवोनए ऽधिस्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ॐ अयाश्चाग्नेस्यनभिशस्ति-
पाश्चसत्यमित्वमया ऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजगुं. स्वाहा ॥ इ-
दमग्नयेऽयसेनमम ॥ ॐ येतेशतंवरुणंयेसहस्रंयज्ञियाः पाशावितताम्हान्तः ॥
तेभिर्नो ऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्काः स्वाहा ॥ इदं वरुणायस-
वित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यश्चनमम ॥ ॐ उदुत्तमंवरुणपाश-
मस्मदवाधमंविमध्यमगुं. श्रथाय ॥ अथावयमादित्यव्रतेतवानागसो ऽअदितये-
स्यामस्वाहा ॥ इदं वरुणायादित्यायादितयेनमम ॥ ॐ प्रजापतयेस्वाहा ॥ इदं
प्रजापतयेनमम ॥ इतिनवाहुतयः ॥ अग्न्यायतनस्यसमंताद्दिक्षुविदिक्षुचदशदि-

क्यांपालानांसदीपमाषभक्तबलयोदेयाः ॥ ॐत्रातारमिंद्र० त्विंद्रः इन्द्रांय सांगा-
यसपरिवारायसायुधायसशक्तिकायएतंसदीपमाषभक्तबलिंसमर्पयामि ॥ भो इ-
न्द्रस्वांदिशंरक्षबलिंभक्षममसकुटुंबस्यसपरिवारस्य आयुः कर्ताक्षेमकर्ताशुभक-
र्ताशान्तिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव । अनेनबलिदानेनइन्द्रः प्रीयताम् ॥
एवंसर्वत्र १ ॐ त्वन्नोअग्ने० अग्नयेसां० ॥ भोअग्नेदिशंरक्षबलिं० अ० अग्निः
प्री० ॥ २ ॥ ॐ यमायत्वां० पित्रे ॥ यमायसां० मि ॥ भोयमदि० बलिं० आ०
यमः प्री० ॥ ३ ॥ ॐ असुन्वंतम० निर्ऋतयेसां० ॥ बलिं० मि० भोनिर्ऋतेदि०
आ० निर्ऋतिः प्री० ॥ ४ ॥ ॐ तत्वायामि० धीः वरुणायसां० ॥ भोवरुणदि० ॥
आ० ॥ वरुणः प्री० ॥ ५ ॥ ॐ आनोनियु० नः वायवेसां० मि० ॥ भोवायोदि०
अ० वायुः प्री० ॥ ६ ॥ ॐ वय गूं. सोम० हि ॥ सोमायसां० भोसोमदि० बलिं० रामः
आ० सोमः प्री० ॥ ७ ॥ ॐ तमीशानं० ये ॥ ईशानायसां० मि ॥ भोईशानदि० ॥ ४३ ॥

ह्य० ईशानः प्री० ॥८॥ ॐ अस्मेरुद्रामे० वाः ॥ ब्रह्मणेसां० मि ॥ भोब्रह्मन् । अ० ब्रह्माप्री० ॥ ९ ॥ स्योनापृ० प्रथाः । अनंतायसां० मि ॥ भोअनंतदि० बलिं० ह्य० अनंतः प्री० ॥ १० ॥ ततोग्रहवेदीसमीपेग्रहादिभ्यः सदीपमाषभक्त-बलयोदेयः ॐ आकृष्णेन० पश्यन् ॥ १ ॥ सूर्यायसांगायसपरिवारायसायुधाय-सशक्तिकायईश्वराग्निरूपाधिदेवताप्रत्यधिदेवता सहितायएतंसदीपमाषभक्तब-लिंसमर्पयामि । भोसूर्यइमंबलिंगृहाणममसकुटुंबस्यसपरिवारस्यआयुः कर्ताक्षे-मकर्ताशुभकर्ता शांतिकर्ता पुष्टिकर्तातुष्टिकर्तावरदोभव । अनेनबलिदानेनसूर्यः प्रीयताम् । १ । ॐ इमन्देवा० राजा ॥ सोमायसां० उमाऽपाधिदेवताप्रत्य-धिदे० मि । भोसोमइमं बलिं० । अने० सोमः प्री० । २ ॐ अग्निर्मू० ति । भौमाय सां० स्कंदभूमिरूपाधिदेवताप्रत्यधिदे० मि । भो भौ मइमं बलिं० । 
७ अनेन० भौमः प्री० ॥ ३ ॥ ॐ उद्बुध्यस्वा० त । बुधायसां० नारायणविष्णुरू-

ग्र. शा.
॥ ५५ ॥

पञ्चधिदेवता प्रत्यधिदेवतास० मि । भोबुधइमं ब० । अनेन० बुधः प्री० ४ ।
ॐ बृहस्पते० मू । बृहस्पतये सां० ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदे० मि । भोबृ-
हस्पतेइमं ब० । अनेन० बृहस्पतिः प्री० । ५ । ॐ अन्नात्परि० धु । शुक्रायसां०
इन्द्रेन्द्राणीरूपाधिदेवताप्रत्यधिदे० मि । भोशुक्रइमं ब० । अनेन० शुक्रः प्री०
६ ॐ शन्नोदेवी० नः । शनैश्चरायसां० यमप्रजापतिरूपाधिदेवताप्रत्यधिदे० मि ।
भोशनैश्चरइमं ब० । अनेन शनैश्चरः प्री० ७ । ॐ कयामश्चि० ता । राह-
वेसां० कालसर्परूपाधिदेवताप्रत्यधिदे० मि । भोराहोइमं ब० । अनेन०राहुः प्री०
। ८ । ॐ केतुंकेण्वं० थाः । केतवेसां० चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदे०
मि । भोकेतोइमं ब० अनेन० केतुः प्री० ॥ ९ ॥ ॐ गणानांत्वा० मू । गणप-
येसां० मि । भोगणपतेइमं ब० । अनेन० गणपतिः प्री० १ । ओं अम्बेऽअ-
म्बिके० मू । दुर्गायैसांगायै० मि । भोदुर्गेइमं० आयुः कर्त्रिक्षे० शां० पु० तु०

रामः
॥ ५५ ॥

वरदाभव। अनेन० दुर्गाप्री०।२। वायोजे० ये। वायवेसां० मि ॥ भोवायोइमं ब०। अने० वायुः प्री०।३। ॐ घृतं घृत० हा ॥ आकाशायसां० मि। भो आकाशइमं ब० अने० आकाशः प्री०।४। ॐ यावांकशा० म्। अश्विभ्यांसांगाभ्यां० मि। भोअश्विनौइमंबलिं गृन्हीतंमम० आयुः कर्तारौ० वरदौभवतं। अ० अश्विनौप्रीयेतां ॥ ५ ॥ ॐ वास्तोष्पतेप्र० दे। वास्तोष्पतयेसां० मि ॥ भोवास्तोष्पतेइमं० अने० वास्तोष्पतिः प्री० ६ अथवादिक्पालेभ्योएकतन्त्रेणैकमेवबलिंदद्यात् ॐ प्रच्यैदिशेस्वाहा वाच्यैदिशे स्वाहा दक्षिणायैदिशेस्वाहावाच्यैदिशे-स्वाहाप्रतीच्यैदिशेस्वाहावाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहावाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशेस्वाहा ॥ इन्द्रादिदशदिक्पालेभ्यः सांगेभ्यः स परिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान्सदीपमाषभक्तबलीन्समर्पयामि। भोभोइन्द्रादिदशदिक्पालाः सांगाः सपरिवाराः सायुधाः

सशक्तिकाः ममस० आयुकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदाः भवत ॥ अनेनबलिदानेन इन्द्रादिदशदिक्पालाः प्रीयंतां १ एवंसर्वेभ्यो-ग्रहेभ्यः एकतन्त्रेणैकमेवबलिंदद्यात् । ॐ ग्रहाऊर्जा० म् । सूर्यादिनवग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवताप्रत्यधिदेवतागण-पत्यादिपञ्चलोकपालवास्तोष्पतिसहितेभ्यः एतं सदीपमाषभक्तबलिंसमर्पयामि। भोभोसूर्यादिग्रहाः सांगाः सपरिवाराः सायुधाः सशक्तिकाः अधिदेवताः प्रत्य-धिदेवताः गणपत्यादिपञ्चलोकपालवास्तोष्पतिसहिताः ममसकुटुम्बस्यसपरि-वारस्यआयुः कर्तारः शुभकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदाः भवत ॥ अनेनबलिदानेनसूर्यादिग्रहाः प्रीयन्ताम् । अथक्षेत्रपालबलिदानं । एस्कस्मिन्वंशादिपात्रेकुशानास्तीर्यतदुपरि आहारचतुर्गुणंरद्विगुणंवा माषभक्त-दध्योदनंवा जलपात्रंचनिधायचतुर्मुखंदीपं प्रज्वाल्यहरिद्राकुम्कुमादिपताकायु-

तंकृत्वा । ॐ नहिस्पश० वांः क्षेत्रपालायनमइति संपूज्यप्रार्थयेत् । ॐ नमो-
क्षेत्रपालस्त्वंभूतप्रेतगणैसह ॥ पूजाबलिंगृहाणेमंसौम्योभवतुसर्वदा ॥ आयुरा-
रोग्यमेदेहिनिर्विघ्नंकुरुसर्वदा ॥ ततोबलिदानं ॥ क्षेत्रपालायसांगायसपरिवारा-
यसायुधायसशक्तिकायमारीगणभैरवराक्षसकूष्माण्डवेतालभूत प्रेतपिशाचडा-
किनीशाकिनीपिशाचिनीगणसहितायएतंसदीपमाषभक्तबलिंसमर्पयामि भोक्षे ॥
त्रपालक्षेत्रंरक्षबलिंभक्षममसकुटुंबस्य सपरिवारस्य आयुः कर्ता क्षेमकर्ताशान्ति-
कर्ता पुष्टिकर्ता तुष्टिकर्ता वरदोभव । अनेनबलिदानेनक्षेत्रपालः प्रीयताम् ।
यजमानस्यमस्तकोपरिसकृद्भ्रामयित्वा । अनवेक्षमाणेन दुर्ब्राह्मणेनशूद्रेणवाब-
लिं गृहीत्वा चतुष्पथेस्थापयेत् । ततोयजमानस्तस्य पृष्ठतोद्वारपर्यन्तं गत्वाजलं
क्षिपेद्धिंकारेणेतिमन्त्रेण। ॐ हिङ्कारायस्वाहाहिङ्कृतायस्वाहा क्रन्दतेस्वाहावक्र-
न्दायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहागन्धायस्वाहा घ्रातायस्वाहानिवि-

ष्ठायस्वाहोपविष्टायस्वाहा सन्दितायस्वाहावल्गतेस्वाहा सीनायस्वाहाशयानाय
स्वाहा स्वपतेस्वाहाजाग्रतेस्वाहा. कूजतेस्वाहाप्रबुद्धायस्वाहा विजृम्भमाणाय-
स्वाहा विचृत्तायस्वाहा सगूँहानायस्वाहोपस्थितायस्वाहा यनायस्वाहाप्प्राय-
णायस्वाहा ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्य
धाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवन्तिसरि-
तोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिप-
णोरीषमाणाः ॥ ६ ॥ सिन्धोरिवप्राध्वनेशूघनासोवातप्प्रमियः पतयन्तिजह्वाः ॥
घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ७ ॥ अभिप्प्रवन्त-
समनेवयोषाः कल्याण्यः स्मयमानासोऽअग्निम् ॥ घृतस्यधाराः समिधोनसन्त
ताजुषाणोहर्य्यतिजातवेदाः ॥ ८ ॥ कन्याऽइववहतुमेतवाऽउअञ्ज्यञ्जानाऽअभि-
चाकशीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्य-

र्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राऽद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानोघृत-स्यधारामधुमत्पवन्ते ॥ १ ॥ धामन्तेव्विश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरा-युषि ॥ अपामनीकेसमिथेयऽ आभृतस्तमस्याममधुमन्तन्तऽऊर्म्मिम् ११ पुनस्त्वा-दित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोव्वसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वंबर्धयस्व-सत्याः सन्तुयजमानस्यकामाः १२ यजमानः पाणिपादं प्रक्षाल्याचम्य ततः नारि केलादिफलंरक्तवस्त्रवेष्टितं द्वादशषट्चतुः स्रुवेणगृहीतमाज्यं स्रुचयांकृत्वा ॐ पूर्णाहुत्यैनमः इति संपूज्य पूर्णाहुतिंजुहुयात् । तत्र मन्त्राः ॥ ॐ समुद्रादूर्म्मि-र्मधुमाँऽउदारदुपा ठं. शुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वा-देवानाममृतस्यानाभिः ॥ १ ॥ व्वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामान-मोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुः शृङ्गोवमीद्गौरऽएतत् ॥ २ ॥ चत्वारि-शृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिम-

होदेवोमर्त्याँऽआविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्व-
विन्दन् ॥ इन्द्रऽएक ठं. सूर्यऽएकञ्जजानव्वेनादेक ठं. स्वधयानिष्टतक्षुः ॥ १२ ॥
सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्त धामप्रियाणि ॥ सप्तहोत्राः
सप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ १३ ॥ मूर्द्धानन्दिवोऽअरतिंपृ-
थिव्याऽवैश्वानरऽमृतऽआजातमग्निम् ॥ कवि ठं. संम्राजमतिथि ञ्जनानामास्न-
न्नापात्रञ्जनयन्तदेवाः ॥ १४ ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवव्वि-
क्रीणावहा ऽइषमूर्ज गूँ. शतक्रतोस्वाहा ॥ १५ ॥ इदमग्नयेवै श्वानरायवसुरुद्रा-
दित्येभ्यः शतक्रतवेसप्तवतेऽअग्नयेऽद्भ्यश्चनमम ॥ ततोवसोर्द्धारांजुहुयात् ॥
तत्रमंत्राः ॥ ॐ सप्ततेऽअग्नेसमिधः स० ॥१॥ शुक्र ज्योतिश्चचित्रज्योतिश्चसत्य-
ज्योतिश्चज्योष्मांश्च ॥ शुक्रश्चऽऋतपाश्चात्य गूँ. हाः ॥ २ ॥ ईदृङ्चान्यादृङ्च-
सदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ ३ ॥ ऋतश्चसत्यश्चध्रुवश्च-



दक्षिण
कृष्ण
राहु
कृष्ण
शनि
कृष्ण
केतु
पश्चिम
रक्त
भौम
रक्त
सूर्य
पीत
गुरू
उत्तर
श्वेत
चन्द्र
श्वेत
शुक्र
हरित
बुध
पूर्व

धरुणश्च ॥ धर्त्ताचविधर्ताचविधारयः ॥४॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥५॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षासःप्र-तिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥६॥ स्वतवांश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषि ॥ ७ ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रं दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८ ॥ इम ठं. स्तन-मूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्तमर्व्वन्त्स-मुद्रिय गूँ. सदनमाविशस्व ॥ ९ ॥ घृतम्मिमिक्षेघृतमस्यम् ॥ १ ॥ वसोः प० क्षः स्वाहा ॥ ततोऽग्निंप्रदक्षिणीकृत्यपश्चिमदेशेप्राङ्मुखोपविश्य ॥ ततः स्रुवेणभ-स्ममानीय ॐ त्र्यायुषंजमदग्नेः इति ललाटे । कश्यपस्यत्र्यायुषम् । इति ग्रीवायां । यद्देवेषुत्र्यायुषं इति दक्षिणांशे ॥ तन्नोऽअस्तुत्र्यायुषमिति हृदि ।

संस्रवप्राशनं । आचमनं । पवित्राभ्यांमार्जनं । अग्नौपवित्रः प्रतिपत्तिः ॥ ब्रह्मणो
पूर्णपात्रदानं ॥ कृतस्य ग्रहशान्ति होमकर्मणों गतयाविहितं इदं पूर्णपात्रं स
दक्षिणं ब्रह्मणेतुभ्यमहंसंप्रददे ॥ ॐ द्यौस्त्वाददातु पृथिवीत्वाप्रतिगृह्णातु ॥
अग्नेपश्चात्प्रणीताविमोकः ॥ ॐ आपः शिवाः शिवतमाः शांताः शान्ततमा-
स्तास्तेकृण्वं तुभेषजं उपयमनकुशैर्मार्जयेत् ॥ उपयमनकुशानामग्नौप्रक्षेपः ॥ ततः
श्रेयः संपाद्यदानं ॥ अद्येत्यादिकृतस्यग्रहशांत्याख्यस्यकर्मणः यजमा नायश्रेयो-
दानं करिष्ये ॥ तत्रादौ वचः प्रतिवचनम् । शिवाआपः सन्तु ॥ सन्तुशिवाआपः ॥
सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टं चास्तु ॥ अस्त्वक्षतमरिष्टं च ॥
यजमानहस्तेगंधादिदानं ॥ गन्धाः पांतु ॥ सुमंगल्यंचास्तु ॥ अक्षताः पान्तु ॥
आयुष्यमस्तु ॥ पुष्पाणिपान्तु ॥ सौश्रियमस्तु ॥ यत्पापंरोगं अशुभंअकल्याणं
तद्दूरेप्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु । भवन्नियोगेनमयाऽस्मिन्ग्रहशान्त्याख्ये-

कर्मणियत्कृतं आचार्यत्वंतदुत्पन्नं श्रेयः तत् अमुनासाक्षतेनसजलेनपूगीफलेन- तुभ्यमहं संप्रददे ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ तेनश्रेयसात्वंश्रेयोवान्भव ॥ यजमानः भवामीतितेनवाच्यं ॥ एवमेवब्रह्मादयोऋत्विजोजापकादयश्च ॥ यद्वा ॥ ब्रह्मादयोऋत्विजोजापकाश्चआचार्यद्वाराश्रेयोदानं कुर्युः ॥ तद्यथा ॥ भवन्नि- योगेनमयाअस्मिन् ग्रहशांत्याख्येकर्मणियत्कृतं आचार्यत्वं तथाएभिर्ब्राह्मणैः सहयत्कृतंब्रह्मत्वं गाणपत्यत्वंसादस्यत्वंतथाचयः कृतोजपः आचार्यत्वात् ब्रह्म- त्वात् गाणपत्यत्वात् सादस्यत्वात् जापकत्वात् यदुत्पन्नंश्रेयः तत् अमुनासाक्ष- तेनसजलेनपूगीफलेनतुभ्यमहंसंप्रददे ॥ तेनश्रेयसात्वं श्रेयोवान्भव ॥ भवामी- तितेनवाच्यं ॥ ततोआचार्यादीन् गन्धवस्त्रालंकारादिभिर्यथाविभवंपूजयेत् ॥ आचार्यादिभ्योब्राह्मणेभ्योदक्षिणांदद्यात् तत्रक्रमः ॥ आचर्यायगां ॥ १ ॥ ब्रह्मणे वृषभं ॥ २ ॥ सदस्यायअश्वं ॥ ३ ॥ ऋत्विग्भ्योसुवर्णंदद्यात् ॥ ४ ॥ कृतस्यग्रहशा-

न्तिकर्मणः सांगतासिध्यर्थं तत्संपूर्णफलप्राप्त्यर्थंइदंगोनिष्क्रयभूतंद्रव्यं अमुक-
गोत्राय अमुकशर्मणेब्राह्मणाय आचार्यायतुभ्यमहंसंप्रददे । ॐ स्वस्तीतिपठेत्
॥ १ ॥ कृ० इदं वृषनिष्क्रयभूतं द्रव्यंय० ॥ २ ॥ कृ० इदं सदस्यायअ श्वनिष्क्रयभू०
॥३॥ कृ० इदं ऋत्विग्भ्यः सुवर्णनिष्क्रयभू० ॥४॥ ततोब्राह्मणभोजनसंकल्पंकुर्यात् ॥
कृतस्य० ग्रहशां० कर्म० यथासंख्यकान्ब्राह्मणान् यथाकालेयथोत्पन्नेनान्नेनाहं-
भोजयिष्ये ॥ भोजनांतेतेभ्यः ताम्बूलदक्षिणांचदास्ये ॥ ततो ग्रहपीठदेवतानां
गन्धादिपंचोपचारैरुत्तरपूजनं ॥ आवाहितदेवताभ्योनमः ॥ आचार्यायप्रधान-
पीठंदद्यात् ॥ कृ० इदं ग्रहपीठंमातृकापीठंसोपस्करंदक्षिणासहितं आचार्या-
यतु० ॥ ततोरुद्रकलशदेवतान्तरकलशोदकमेकस्मिन्पात्रेकृत्वादूर्वापंचपल्लवैरुद-
ङ्मुखआचार्यस्तिष्ठन् चत्वारोऋत्विजश्चसकुटुम्बंसपत्नीकंयजमानं प्राङ्मुखमु-
पविष्टमभिषिंचेयुः ॥ तत्रमन्त्राः देवस्यत्वा० ॥ सरस्वत्यैवाचोयन्तुर्यंत्रियेदधामि-

बृहस्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ १ ॥ देवस्यत्वा० ॥ सरस्वत्यैव्वाचोयं तुर्यंत्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥ २ ॥ देवस्यत्वा० ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामिसरस्वत्यैभैषज्येनव्वीर्यायान्नाद्यायाभिषिंचामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिंचामि ॥ ३ ॥ ॐ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥१॥ प्रद्युम्नश्चानिरुद्धश्चभवन्तुविजयायते ॥ आखण्डलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥२॥ वरुणः पवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताः सर्वेदिक्पालाः पांतुतेसदा ॥३॥ कीर्तिर्लक्ष्मिर्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः॥ बुद्धिर्लज्जावपुः शान्तिः कान्तिस्तुष्टिश्चमातरः ॥४॥ एतास्त्वामभिषिंचन्तुदेवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमाभौमोबुधजीवसितार्कजाः ॥५॥ ग्रहास्त्वामभिषिंचन्तुराहुः केतुश्चतर्पिताः ॥ देवदानवगन्धर्वायक्षराक्षसपन्नगाः ॥६॥ ऋषयोमनवोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमा-

८

नागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥
औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानिजल-
दानदाः ॥ एतेस्त्वामभिषिंचन्तुधर्मकामार्थसिद्धये ॥ ९ ॥ अमृताभिषेकोस्तु ॥ शांतिः
पुष्टिस्तुष्टिश्चास्तु ॥ यत्पापंतत्प्रतिहतमस्तु अन्येभ्योयथाशक्तिभूयसींदक्षिणांद-
द्यात् ॥ कृ० थं तन्मध्येन्यूनातिरिक्तदोषपरिहारार्थंनाना गोत्रेभ्योनानाशर्मभ्यो-
ब्राह्मणेभ्यः समाश्रितबंधुवर्गेभ्योदीनानाथेभ्यश्चयथोत्साहांभूयसींदक्षिणांविभ-
ज्यदातुमहमुत्सृजे ॥ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयंतुमरुतः सुदानव-
इन्द्रप्राशूर्भवासचा ॥ यान्तुदेवगणाः सर्वेपूजामादायमामकीं ॥ इष्टकामसमृध्यर्थं-
पुनरागमनायच ॥ आवहितदेवताः स्वस्थानेषुगच्छत ॥ १ ॥ ॐ यज्ञयज्ञंगच्छयज्ञ-
पतिंगच्छस्वांयोनिंगच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकः सर्ववीरस्तज्जु-
षस्वस्वाहा । गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रग-

च्छहुताशन ॥ यज्ञनारायणास्वस्थानेगच्छ ॥ २ ॥ ॐ चतुर्भिश्चचतुर्भिश्चद्वाभ्यां पञ्चभिरेवच ॥ हूयतेचपुनर्द्वाभ्यां तस्मैयज्ञात्मनेनमः ॥ मयात्कृतं यथाकालं यथादेशंयथाज्ञानंयथाशक्तिग्रहयज्ञाख्यंकर्मतेनश्रीपरमेश्वरःप्रीयतां ॥ ॐ तत्स-त्ब्रह्मार्पणमस्तु ॥ सकुशजलंभूमौक्षिपेत् ॥ करौसंपुटीकृत्य ॥ मयायत्कृतंग्रह-यज्ञाख्यंकर्मतत्कालहीनं भक्तिहीनं शक्तिहीनं श्रद्धाहीनं भवतांब्राह्मणानांवच-नात् श्रीसूर्याद्यावहितदेवताप्रसादात्सर्वंविधेःपरिपूर्णमस्त्वितिभवन्तोब्रुवन्तु ॥ अस्तुपरिपूर्णं इतिब्राह्मणाःवदेयुः ॥ जपच्छिद्रंतपच्छिद्रंयच्छिद्रंशान्तिकर्मणि ॥ सर्वं भवतु मेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रिया-दिषु । न्यूनंसंपूर्णतांया तुसद्योवंदेतमच्युतं ॥ ॐविष्णवेनमः ॥३॥ ततो तिलकाशी-र्वादः । श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं पशुंबहु-

पुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ मन्त्रार्थाः सफलाः संतुपूर्णाः संतुमनोरथाः ॥ शत्रूणां बुद्धिनाशोस्तुमित्राणामुदयस्तव॥ब्राह्मणान् भोजयित्वादीनानाथांश्चान्ना-दिना सन्तोष्यस्वयंसुहृन्मित्रादियुतः सोत्साहः सन्तुष्टोहविष्यं भुंजीतेतिशिवम् ॥

इति श्री मन्मालवीयवेणीराम मिश्रात्मज यागेश्वर मिश्र कृतोग्रहयज्ञप्रयोगस्समाप्तः ॥

---

श्रीगणेशाय नमः ॥ अथ सर्वतोभद्रालिङ्गतोभद्रकारिका ॥ प्रागुदीच्यांगता रेखाः कुर्यादेकोनविंशतिं ॥ खण्डेन्दुस्त्रिपदः कोणेश्रृंखलापञ्चभिःपदैः ॥ १ ॥ एकादशपदावल्लीभद्रन्तुनवभिःपदैः ॥ चतुर्विंशत्पदावापीपरिधिर्विंशतिः पदैः ॥ २ ॥ मध्येषोडशभिः कोष्ठैःपद्ममष्टदलंस्मृतं ॥ श्वेतेन्दुःश्रृंखलाकृष्णावल्लीनीलेनपूरयेत् ॥ ३ ॥ भद्रारुणासितावापीपरिधिः पीतवर्णकः ॥ वाह्यान्तरदलः श्वेताकार्णिकापीतवर्णिका ॥ ४ ॥ परिध्यावेष्टितंपद्मंवाह्येसत्वंरजस्तमः ॥ तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान् ॥ ५ ॥ इति सर्वतो भद्रं ॥ अथ लिङ्गतोभद्रं ॥ रेखास्त्वष्टाशप्रोक्ताश्चतुर्लिङ्गसमुद्भवे कोणेन्दुस्त्रिपदःश्वेतास्त्रिपदैः कृष्णश्रृंखलाः ॥ १ ॥ वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदं ॥ भद्र पार्श्वेमहारुद्रंकृष्णमष्टादशैः पदैः ॥ २ ॥ शिवस्यपार्श्वतोवापींकुर्यात्पञ्चपदांसितां ॥ पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः ॥ ३ ॥ शिरसिश्रृंखलायाश्चकुर्यात्पीतंपदत्रयं ॥ लिङ्गानांस्कन्धतःकोष्ठाविंशतिरक्तवर्णकाः ॥ ४ ॥ परिधिःपीतवर्णैःस्तुपदैःषोडशभिःस्मृतः ॥ पदै

स्तुनवाभिः पश्चाद्रक्तंपद्मंसकार्णकं ॥ ५ ॥ इतिलिंगतो भद्रं ॥ तत्रपञ्चवर्णान्युक्तानिपञ्चरात्रे ॥ रजांसिपञ्चवर्णानिम-
ण्डलार्थंहिकारयेत् ॥ शालितण्डुलचूर्णेनशुक्लंवायवसम्भवं ॥ १ ॥ रक्तंकुसुम्भसिन्दूरंगैरिकादिसमुद्भवं ॥ हरितालोद्भवं-
पीतंरजनीसम्भवंकाचित् ॥ २ ॥ कृष्णदग्धैर्यवैः कार्यंहरितंबिल्वचूर्णकं ॥ कारयेत्सर्वधान्यैर्वावर्णकैरुपशोभितं ॥ ३ ॥
अथभद्रेदेवतास्थापन क्रमः ॥ साचार्योयजमानः सर्वतोभद्रमण्डलसमीपेउपविश्य आचम्य ३ प्राणानायम्य ॥ मध्येकार्णि-
कायां ॐ ब्रह्मणेनमः ब्रह्माणंआवाहयामिस्थापयामि ॥ १ ॥ एवमग्रेपिउत्तरेवाप्यां ॐ सोमाय० सोमं० ॥ २ ॥ ईशा-
न्यांखण्डेन्दौ ॐ ईशानाय० ईशान० ॥ ३ ॥ पूर्ववाप्यां ॐ इन्द्राय० इन्द्रं० ॥ ४ ॥ आग्नेयांखण्डेन्दौ ॐ अग्नये०
अग्निं० ॥ ५ ॥ दक्षिणेवाप्यां ॐ यमाय० यमं० ॥ ६ ॥ नैर्ऋत्यांखण्डेन्दौ ॐ निर्ऋतये० निर्ऋतिं० ॥ ७ ॥ पश्चिमेवा-
प्यां ॐ वरुणाय० वरुणं० ॥ ८ ॥ वायव्यांखण्डेन्दौ ॐ वायवे० वायुं० ॥ ९ ॥ वायुसोममध्येभद्रेलिङ्गेवा ॐ अष्ट-
वसुभ्यो० अष्टव० ॥ १० ॥ सोमेशानमध्येभद्रेलिङ्गे ॐ एकादशरुद्रेभ्यो० एकादशरु० ॥ ११ ॥ इशानेन्द्रमध्ये ॐ
द्वादशादित्यभ्यो० द्वादशादि० ॥ १२ ॥ इन्द्राग्न्योर्मध्येभद्रेलिङ्गे ॐ अश्विभ्यां० अश्विनौ० ॥ १३ ॥ अग्नियममध्येभद्रे-
लिङ्गे ॐ सप्तयक्षेभ्यो० सप्तयक्षा० ॥ १५ ॥ निर्ऋतिवरुणमध्येभद्रेलिङ्गे ॐ भूतनागेभ्यो० भूतनागा० ॥ १६ ॥ वरु-
णवायुमध्येभद्रेलिङ्गे ॐ गन्धर्वाप्सरोभ्यो० गन्धर्वाप्सरसः० ॥ १७ ॥ ब्रह्मसोममध्येलिङ्गेवाप्यां ॐ स्कन्दाय० स्कन्दं०
॥ १८ ॥ तदुत्तरे ॐ वृषभाय० वृषभं० ॥ १९ ॥ तदुत्तरे ॐ शूलाय० शूलं० ॥ २० ॥ तत्रैव ॐ महाकालाय० महा-
कालं० ॥ २१ ॥ ब्रह्मेशानमध्येशृंखलायां ॐ दक्षादिसप्तगणेभ्यो० दक्षादिसप्तगणा० ॥ २२ ॥ ब्रह्मेन्द्रमध्येवाप्यां ॐ
दुर्गायै० दुर्गा ॥ २३ ॥ तत्पूर्वे ॐ विष्णवे० विष्णु० ॥ २४ ॥ ब्रह्माग्निमध्येशृंखलायां ॐ स्वधायै० स्वधां० ॥ २५ ॥
ब्रह्मयममध्येवाप्यां ॐ मृत्युरोगेभ्यो० मृत्युरोगा० ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्येशृंखलायां ॐ गणपतये० गणपं० ॥ २७ ॥

ब्रह्मवरुणमध्येवाप्यां ॐ अद्भ्यो० अपःआ० ॥ २८ ॥ ब्रह्मवायुमध्येशृंखलायां ॐ मरुद्भ्यो० मरुतःआ० ॥ २९ ॥ ब्रह्म-
णःपादमूलेकर्णिकाधःमध्यएव ॐ पृथिव्यै० पृथिवीं० ॥ ३० ॥ तत्रैव ॐ गङ्गादिनदीभ्यो० गङ्गादिनदीःआ० ॥ ३१ ॥
तत्रैव ॐ सप्तसागरभ्यो० सप्तसागरा० ॥ ३२ ॥ तदुपरिकर्णिकापरिधौ ॐ मेरवे० मेरु० ॥ ३३ ब्रह्मपरिधौसोमसमीपे
ॐ गदायै० गदां० ॥ ३४ ॥ ईशानांतिके ॐ त्रिशूलाय० त्रिशूलं ॥ ३५ ॥ इन्द्रान्तिके ॐ वज्राय० वज्रं० ॥ ३६ ॥
अग्निसमीपे ॐ शक्तये० शक्तिं० ॥ ३७ ॥ यमान्तिके ॐ दण्डाय० दण्डं० ॥ ३८ ॥ निर्ऋतिसमीपे ॐ खड्गाय० खड्गं०
॥ ३९ ॥ वरुणांतिके ॐ पाशाय० पाशं० ॥ ४० ॥ वायुसमीपे ॐ अंकुशाय० अंकुशं० ॥ ४१ ॥ तद्बाह्ये उत्तरे० ॐ
गौतमाय० गौतमं० ॥ ४२ ॥ ईशान्यां ॐ भरद्वाजाय० भरद्वाजं० ॥ ४३ ॥ पूर्वे ॐ विश्वामित्राय० विश्वामित्रं०
॥ ४४ ॥ आग्नेयां ॐ कश्यपाय० कश्यपं० ॥ ४५ ॥ दक्षिणे ॐ जमदग्नये० जमदग्निं ॥ ४६ ॥ नैर्ऋत्यां ॐ वसिष्ठाय०
वसिष्ठं० ॥ ४७ ॥ पश्चिमेअत्रये० अत्रिं० ॥ ४८ ॥ वायव्यां ॐ अरुन्धत्यै० अरुन्धतीं० ॥ ४९ ॥ तद्बाह्ये पूर्वादि क्रमेण
ॐ ऐंद्र्यै० ऐन्द्रीं० ॥ ५० ॥ ॐ कौमार्यै० कौमारीं० ॥ ५१ ॥ ॐ ब्राह्म्यै० ब्राह्मीं ॥ ५२ ॥ ॐ वाराह्यै० वाराहीं
॥ ५३ ॥ ॐ चामुण्डायै० चामुण्डां० ॥ ५४ ॥ ॐ वैष्णव्यै० वैष्णवीं ॥ ५५ ॥ ॐ माहेश्वर्यै० माहेश्वरीं० ॥ ५६ ॥
ॐ वैनायक्यै० वैनायकीं० ॥ ५७ ॥ इतिरुद्रकल्पद्रुमाद्यनुसारीसर्वतोभद्रदेवताः ॥ अ० लिं० भ० देवताविशेषः ॥ तद्बा-
ह्यपूर्वेअसिताङ्गभैरवाय० असिताङ्गभैरवं० ॥ १ ॥ आग्नेयांरुरुभैरवाय० रुरुभैरवं० ॥ २ ॥ दक्षिणे ॐ चण्डभैरवाय०
चण्डभैरवं० ॥ ३ ॥ नैर्ऋत्यां ॐ क्रोधभैरवाय० क्रोधभैरवं० ॥ ४ ॥ पश्चिमे ॐ उन्मत्तभैरवाय० उन्मत्तभैरवं० ॥ ५ ॥
वायव्यां ॐ कपालभैरवाय० कपालभैरवं ॥ ६ ॥ उत्तरे ॐ भीषणभैरवाय० भीषणभैरवं० ॥ ७ ॥ ईशान्यां ॐ संहार-
भैरवाय० संहारभैरवं ॥ ८ ॥ तद्बाह्यपूर्वादिक्रमेण ॐ भवाय० भवं० ॥ ९ ॥ ॐ शर्वाय० शर्वं० ॥ १० ॥ ॐ पशु-

पतये० पशुपतिं ॥ ११ ॥ ॐ ईशानाय० ईशानं ॥ १२ ॥ ॐ रुद्राय० रुद्रं० ॥ १३ ॥ ॐ उग्राय० उग्रं ॥ १४ ॥ ॐ भीमाय० भीमं ॥ १५ ॥ ॐ महते० महांतं ॥ १६ ॥ ॐ अनंताय० अनंतं ॥ १७ ॥ वासुकये० वासुकिं ॥ १८ ॥ ॐ तक्षकाय० तक्षकं ॥ १९ ॥ ॐ कुलिशाय ० कुलिशं ॥ २० ॥ कर्कोटकाय० कर्कोटकं ॥ २१ ॥ ॐ शंखपालाय० शंखपालं ॥ २२ ॥ ॐ कंबलाय० कंबलं ॥ २३ ॐ अश्वतराय० अश्वतरं ॥ २४ ॥ ईशानेन्द्रयोर्मध्ये ॐ शूलाय० शूलं ॥ २५ ॥ इन्द्राग्न्योर्मध्ये० ॐ चन्द्रमौलिने० चन्द्रमौलिनं० ॥ २६ ॥ अग्नियमयोर्मध्येचन्द्रमसे० चन्द्रमसं० ॥ २७ ॥ यमनिर्ऋतिमध्ये ॐ वृषभध्वजाय० वृषभध्वजं ॥ २८ निर्ऋतिवरुणयोर्मध्ये त्रिलोचनाय० त्रिलोचनं ॥ २९ ॥ वरुणवायुमध्ये ॐ शक्तिधराय० शक्तिधरं० ॥ ३० ॥ वायुसोमयोर्मध्ये ॐ महेश्वराय० महेश्वरं० ॥ ३१ ॥ सोमेशानयोमध्ये ॐ शूलपाणये० शूलपाणिं ॥ ३२ ॥ इतिलिं० भ० दे० ॥ अथप्रतिमासुअग्न्युत्तारणविधिः ॥ आचार्यः पात्रान्तरंप्रतिमांनिधायघृतेनाभ्यज्य ॥ उपरिजलधारांकुर्यात् ॥ तत्रमन्त्राः ॐ समुद्रस्यत्वा ॥ १ ॥ हिमस्यत्वा ॥ २ ॥ उपज्मन्नु० ॥ ३ ॥ अपामिदन्य० ॥ ४ ॥ अग्नेपावक० ॥ ५ ॥ सनःपावकदी० ॥ ६ ॥ पावकयाय० ॥ ७ ॥ नमस्ते-हरसे० ॥ ८ ॥ नृषदे० ॥ ९ ॥ येदेवादेवानां० ॥ १० ॥ ये० देवेष्वधि० ॥ ११ ॥ प्राणदा० ॥ १२ ॥ अथप्राणप्रतिष्ठां-कृत्वा प्रतिमांहस्तेन संस्पृश्यबीजमन्त्रान्जपेत ॥ ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः अस्यप्राणइहप्राणाः पुनः आँ ह्रीं ० सः।० अस्य जीवइहास्थितः ॥ एवमग्रेपिसर्वेन्द्रियाणि वाङ्मनस्त्वक् चक्षुश्रोत्रजिह्वाघ्राणप्राणाः इहागत्यस्वस्तये-सुखंचिरंतिष्ठन्तुस्वाहा ॥ अस्यैप्राणाः प्रतिष्ठंतुअस्यैप्राणाः क्षरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिकश्चन ॥ इतिप्राणप्रतिष्ठां-कृत्वाप्रतिमांपूजयेत् ॥ इतिअग्न्युत्तारणाविधिः समाप्तः ॥

सम्वत् १९६८ चैत्र कृष्ण ११ गुरौ शुद्ध यन्त्रेप्रकाशितामितिशिवं ॥

पूर्व

| | | | |
|---|---|---|---|
| आत्मनः कुलदेवता १७ | लोकमातरः १३ | देवसेना ९ | मेधा ५ |
| तुष्टिः १६ | मातरः १२ | जया ८ | शची ४ |
| पुष्टिः १५ | स्वाहा ११ | विजया ७ | पद्मा ३ |
| धृतिः १४ | स्वधा १० | सावित्री ६ | गौरी २ गणेश १ |

॥ षोडशमातृकाचक्रम् ॥

॥ सप्तघृतमातृका ॥

॥ श्रीं ॥



कीर्तिर्लक्ष्मी धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती मांगल्येषु प्रपूज्यंते सप्तैता घृतमातरः ॥

॥ इति वसोर्धारा ॥

इति

# समन्त्रकग्रहशान्तिप्रयोग

समाप्तः

यह ग्रन्थ काशी के सम्पूर्ण प्रधान २ कर्मकाण्डियों की संमति से छापा गया है।

पुस्तक मिलने का पता—मैनेजर भार्गव पुस्तकालय चौक बनारस सिटी।